॥ श्रीः ॥

महाकवि—श्रीकालिदास—प्रणीतं

# रघुवंश-महाकाव्यम्।

पञ्चमसर्गमात्रम्।

स्मार्तकर्मानुष्ठाननिष्ठ—कश्यपवंशावतंस—स्वधर्मधुरन्धर-
पाठकोपाह्व—जयकृष्णशर्म्मतनुजनुषा काशीस्थशारदा-
संस्कृत—महाविद्यालयीय—प्रधानाध्यापकेन
गौरीनाथशर्म्मणा विरचितया सुबोधि-
न्याख्यया व्याख्यया परमोप-
योगिसंक्षिप्तकथाभागेन
च संवलितम्।

तच्च

"शारदा संस्कृत ग्रन्थमाला" द्वारा—
काशी—शारदा—भवनात्
समुल्लसितम्

वैक्रमाब्दाः २०११ कर्क

# संक्षिप्त कथाभाग।

## पञ्चम-सर्ग

### अजका स्वयंवर के लिये प्रयाण करना।

विद्यान्ते गुरुदक्षिणां मृगयते कौत्साय यक्षेश्वरात्
आकृष्य व्यतरद्रघुः कनकजाः कोटीश्चतस्रो दश।
देव्यामस्य तदाशिषाऽभवदजः सोऽपीन्दुमत्यै प्रयान्
अस्त्रं शापहरं प्रियंवदमुखात्प्राप्याविशत्कुण्डिनम्॥ ५॥

इस प्रकार विश्वजित यज्ञमें अपना सारा ऐश्वर्य देकर रघु मिट्टी के पात्रको अपने कार्य में लाया करता था।

किसी समय महर्षि वरतन्तु के शिष्य कौत्स अपने गुरुको गुरुदक्षिणा देनेके लिए द्रव्य की कामनासे रघुके पास आये। रघुने अपने यहां आये अतिथि कौत्स की यथाविधि पूजा की। कुशल प्रश्न के उपरान्त कौत्सने कहा "हे राजन्! आपके ऐसे धर्मशील प्रजापालक राजा के होते हुए प्रजा क्यों न सुखी होवे, आपके गुण आपके पूर्वजों से भी कहीं ऊँचे पद पर पहुँचे हुए हैं। मैं इस समय आपके पास अपने स्वार्थके लिए आया हूं, पर आपकी स्थिति देखकर मालूम होता है कि मुझे आपके पास इससे पहले ही आजाना चाहिए था। अस्तु, यद्यपि इस समय आप केवल नामधारी राजाके सदृश होरहे हैं परन्तु, फिरभी देवताओं की तृप्ति के लिए स्वयं क्षीण चन्द्रकी तरह भिक्षुकों में सर्वस्व दान करनेवाले आप अनुपम सुषमाका विकास कर रहे हो। जैसे किसी कवि ने कहा है—

मणिः शाणोल्लीढः, समरविजयी हेतिनिहतो
मदक्षीणो नागः, शरदि सरितः श्यानपुलिनाः।
कलाशेषश्चन्द्रः, सुरतमृदिता बालवनिता,
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः॥

अब मैं गुरु दक्षिणा के लिए और किसी राजा के पास जाता हूं" इतना कह कर ज्योंही कौत्स ने जाना चाहा कि राजा रघुने उन्हें रोक कर पूछा कि हे विद्वन्! कितने धनकी आपको आवश्यकता है, इसपर कौत्स ने गुरुमहर्षि वरतन्तु के साथ हुई सारी बातें कहकर चौदह करोड़ की आवश्यकता बतलाई। रघुने यह कहकर कि आजतक मेरे यहां से कोई अतिथि अपने मनोरथ को बिना पूरा किये लौटा नहीं इसलिए आप मेरे इस पवित्र अग्निशाला में दो तीन दिन कृपा कर प्रतीक्षा करें मैं आपके कार्य के लिए प्रयत्न करता हूं। कौत्सने इसे स्वीकार किया। रघुने कुवेर पर प्रातःकाल चढ़ाई करने का निश्चय किया। रघु प्रातःकाल ज्योंही रथ पर पैर रखता है कि खजानेके पहरेदारों ने आ विनीत होकर निवेदन किया कि "रात्रिमें "कोष-गृह" में सुवर्ण वृष्टि हुई है।" रघुने जाकर उसे देखा और पर्वत की तरह सुवर्ण की वह सारी राशि विद्वान् कौत्स को देदी। कौत्स ने उन्हें पुत्र लाभ का आशीर्वाद देकर गुरु के आश्रम की ओर प्रयाण किया।

कुछ दिन के बाद रघु को एक पुत्र हुआ जिसका नाम "अज" रक्खा गया। क्रमशः समय पाकर शिक्षा आदि पाने के उपरान्त अज युवा अवस्था को प्राप्त हुआ और इन्दुमती के स्वयंर में प्रस्थान किया। मार्ग में मतङ्ग ऋषि के श्राप से गज शरीर को प्राप्त प्रियंवद गन्धर्व को मार कर उसका उस योनिसे उद्धार किया। प्रसन्न होकर उसने उनको सम्मोहन नामक अस्त्र दिया। इस प्रकार वह राजा भोज के नगर में पहुंचा। भोज ने उसका स्वागत किया और सुन्दर सजे सजाए राजभवन में ठहराया। अजने स्नानादि क्रियासे निवृत्त हो विश्राम किया और दूसरे दिन प्रातःकाल स्वयंवरोचित वेष-भूषा को धारण कर स्वयंवरस्थ राज समाज की ओर प्रयाण किया।

---

# रघुवंश-महाकाव्ये

## सुबोधिनीटीकोपेते

### पञ्चमः सर्गः



तमध्वरे विश्वजिति क्षितीशं निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥

( अन्वयः ) उपात्तविद्यः, गुरुदक्षिणार्थी, वरतन्तुशिष्यः, कौत्सः विश्वजिति, अध्वरे, निःशेषविश्राणितकोषजातं, क्षितीशं, तं, प्रपेदे ॥ १ ॥

( टीका ) उपात्तविद्यः=प्राप्तचतुर्दशविद्यः, गुरुदक्षिणार्थी=गुरुदक्षिणार्थं धनाभिलाषुकः, वरतन्तुशिष्यः=वरतन्तुच्छात्रः, कौत्सः, विश्वजिति=विश्वजिन्नाम्नि, अध्वरे=यज्ञे, "यज्ञः सवोऽध्वरो यागः" इत्यमरः, निःशेषविश्राणितकोषजातम्=दत्तसमस्तार्थराशिं, क्षितीशं=भूमिपं, तं=रघुं, प्रपेदे=प्राप ॥ १ ॥

( समासः ) उपात्ताः प्राप्ता विद्याः चतुर्दश विद्याः येन सः । गुरोः दक्षिणा गुरुदक्षिणा ( चतुर्दशकोटिरूपा ) तया अर्थः प्रयोजनं यस्य सः । शिष्यत इति शिष्यः, वरतन्तोः शिष्यः वरतन्तुशिष्यः । कोषाणां जातमिति कोषजातं, निःशेषं विश्राणितं कोषजातं येन सः तं । क्षितेः ईशस्तम् ॥ १ ॥

( सरलार्थः ) गुरुदक्षिणार्थं चतुर्दशकोटिमितं धनमिच्छन् कौत्सो विश्वजिति यज्ञे सर्वस्वं दत्वा शरीरोपरि धृतवस्त्रमात्रावशिष्टस्य रघोरन्तिके समाजगाम ॥ १ ॥

( हिन्दी ) विश्वजित यज्ञ में सम्पूर्ण धन दान देकर बैठे हुए राजा रघु के पास वेदादि विद्या पढ़कर गुरुदक्षिणार्थ धन के लिये वरतन्तु ऋषिका शिष्य कौत्स आया ॥ १ ॥

स मृण्मये वीतहिरण्मयत्वात् पात्रे निधायार्घ्यमनर्घशीलः ।
श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः ॥ १ ॥

( अन्वयः ) अनर्घशीलः, यशसा, प्रकाशः, आतिथेयः, सः, वीतहिरण्मयत्वात्, मृण्मये पात्रे, अर्घ्यं, निधाय, श्रुतप्रकाशं अतिथिं, प्रत्युज्जगाम । २॥

(टीका) अनर्घशीलः=अमूल्यस्वभावः, यशसा=कीर्त्या, प्रकाशः, 'विख्यातः'

इत्यर्थः, आतिथेयः=अतिथिसत्कारकः सः=रघुः, वीतहिरण्मयत्वात्=अपगतसुवर्णपात्रत्वात्, मृण्मये=मृदा निर्मिते पात्रे; अर्घ्यं=पूजाद्रव्यं, निधाय=स्थापयित्वा श्रुतप्रकाशं=शास्त्रज्ञानेन प्रसिद्धं, अतिथिं=अभ्यागतं "कौत्सं" "अतिथिर्ना गृहागते" इत्यमरः, प्रत्युज्जगाम=सम्मुखमाययौ ॥ २ ॥

(समासः) अनर्घम् अमूल्यं शीलं स्वभावो यस्य सः। प्रकाशत इति प्रकाशः। अतिथिषु साधुः आतिथेयः। हिरण्यस्य=सुवर्णस्य विकारो हिरण्मयं, वीतं हिरण्मयं "पात्रं" यस्मात् सः वीतहिरण्मयः, तस्य भावः वीतहिरण्मयत्वं, तस्मात्। मृदो विकारः मृण्मयं, तस्मिन्। अर्घार्थमिदं अर्घ्यम्। श्रूयेते धर्माधर्मौ अनेनेति श्रुतं तेन प्रकाश इति श्रुतप्रकाशस्तम् ॥ २ ॥

(सरलार्थः) रघुः साम्प्रतं काञ्चनभाजनाभावेन मृत्पात्र एव पूजाद्रव्यं स्थापयित्वा अतिथिभूतं तं कौत्सं प्रत्युज्जगाम ॥ २ ॥

(हिन्दी) सर्वस्व दान करने के कारण सोनेका पात्र न रहने से मिट्टी के पात्र में अर्घ रखकर राजा रघु वेदपाठी कौत्स से मिला ॥२॥

तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी।
विशांपतिर्विष्टरभाजमारात्कृताञ्जलिः कृत्यविदित्युवाच ॥३॥

(अन्वयः) विधिज्ञः, मानधनाग्रयायी, कृत्यवित्, विशां पतिः, विष्टरभाजं, तपोधनं, तं, विधिवत्, अर्चयित्वा, आरात्, कृताञ्जलिः "सन्" इति उवाच ॥

(टीका) विधिज्ञः=शास्त्रज्ञः, मानधनाग्रयायी=यशोधनाग्रसरः, कृत्यवित्=कार्यज्ञः, विशांपतिः=मनुजेश्वरः, विष्टरभाजं=आसनासीनं, "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः, तपोधनं=तपस्विनं, तं=कौत्सं, विधिवत्=यथाशास्त्रं अर्चयित्वा=पूजयित्वा, आरात्=समीपे, "आराद्दूरसमीपयोः" इत्यमरः, कृताञ्जलिः=बद्धकरयुगलः, "सन्" "कृतनमस्कारः" इत्यर्थः, इति=इत्थम्, उवाच=जगाद

(समासः) विधिं शास्त्रं जानातीति विधिज्ञः। अग्रे यातुं शीलमस्येति अग्रयायी, मान एव धनं येषां ते मानधनाः, तेषामग्रयायीति मानधनाग्रयायी। कृत्यं वेत्तीति कृत्यवित्। विष्टरं भजतीति विष्टरभाक् तं। तप एव धनं यस्य सः तं। कृतः अञ्जलिः येन सः ॥ ३ ॥

(सरलार्थः) मानधनानां मण्डलीषु प्रथमं पूजनीयः रघुः कौत्सं यथाशास्त्रम् अर्चयित्वा वक्ष्यमाणां वाचम् उवाच ॥ ३ ॥

( हिन्दी ) आसन पर बैठे हुए तपस्वी कौत्सका विधिपूर्वक पूजन कर मानी राजा रघुने हाथ जोड़कर यह कहा ॥ ३ ॥

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥ ४ ॥

(अन्वयः) हे कुशाग्रबुद्धे ! मन्त्रकृतां, ऋषीणां, अग्रणीः, ते, गुरुः, कुशली, अपि, यतः, त्वया, अशेषं, ज्ञानं, लोकेन, उष्णरश्मेः चैतन्यं, इव, आप्तम् ॥४॥

( टीका ) हे कुशाग्रबुद्धे !=हे सूक्ष्मबुद्धे ! *मन्त्रकृतां=मन्त्रद्रष्टॄणां, ऋषीणां =मुनीनाम्, अग्रणीः=श्रेष्ठः, ते=तव, गुरुः, कुशली=क्षेमवान्, अपि=किम्, यतः= यस्मात् गुरोः सकाशात्, त्वया=भवता, अशेषं=सम्पूर्णं "सकलमात्मनिष्ठं"इत्यर्थः ज्ञानं, लोकेन=जनेन, उष्णरश्मेः=सूर्यात्, चैतन्यं = प्रबोधः, इव, आप्तं = प्राप्तम्।

(समासः) कुशस्य अग्रमिति कुशाग्रम्, तद्वत्तीक्ष्णा बुद्धिर्यस्य सः तत्सम्बुद्धौ । मन्त्रान् कुर्वन्ति =प्रयोगविधिना साध्यान् कुर्वन्ति अभीष्टवस्तुलाभाय प्रयुञ्जत इति वा मन्त्रकृतस्तेषां । कुशलमस्यास्तीति कुशली । उष्णा रश्मयो यस्य सः तस्य॥४॥

( सरलार्थः ) हे तीक्ष्णबुद्धे ! सूर्यो यथा अन्धकारावृतं लोकं स्वप्रकाशेन प्रकाशयति तथैव अज्ञानरूपान्धकारावृतं त्वामपि यः महर्षिः दत्तविद्यारूपज्ञान-प्रकाशेन उद्बोधितवान् स वेदमूर्तिः तव गुरुः सकुशलोऽस्ति किम् ॥ ४ ॥

( हिन्दी ) हे श्रेष्ठ बुद्धिवाले ! मन्त्र जाननेवाले ऋषियों में प्रधान तुम्हारे गुरुका कुशल तो है ? ॥ ४ ॥

कायेन वाचा मनसापि शश्वद्यत्सम्भृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥ ५ ॥

( अन्वयः ) कायेन, वाचा, मनसा, अपि, वासवधैर्यलोपि, यत् तपः, सम्भृतं, महर्षेः, त्रिविधं, तत्, "तपः" अन्तरायैः, व्ययं, न, आपाद्यते, कच्चित् ॥

( टीका ) कायेन=उपवासादिकृच्छ्रचान्द्रायणादिना, वाचा=वेदपाठेन, मनसा =गायत्रीजपादिना, अपि, वासवधैर्यलोपि=इन्द्रधैर्यविनाशकं, यत्, तपः, शश्वत्=

*"मन्त्रान् कुर्वन्ति सृजन्तीति मन्त्रकृतस्तेषां मन्त्रकृताम्" इति व्युत्पत्त्या अपौरुषेयाणां वेदमन्त्राणां पौरुषेयत्वं सिद्ध्यति एवं सति तस्मिन्ननाप्तवाक्यवद्धेयता स्याद् अतो मन्त्रकृतामितिविशेषणं वेदस्य अपौरुषेयत्वसाधकं यथा स्यात्तथोपपादितम्। यत्तु केनचिदस्य "मन्त्रस्रष्टॄणां" इति पर्यायो व्यलेखि स सर्वथैव त्याज्यः"।

पुनः पुनः "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः; सम्भृतं=सञ्चितं, महर्षेः=वरतन्तोः, त्रिविधं=वाङ्मनःकायजं, तत् , तपः, अन्तरायैः=विघ्नैः, व्ययं=नाशं, नापाद्यते कच्चित्=न नीयते किम् ॥ ५ ॥

( समासः ) वासवस्य धैर्य्यं इति वासवधैर्यं, तत्, लुम्पतीति वासवधैर्यलोपि। महाँश्चासौ ऋषिश्च महर्षिस्तस्य । तिस्रो विधा यस्य तत् त्रिविधम् ॥५॥

( सरलार्थः ) इन्द्रस्याऽपि धैर्यस्य जैत्रं कायिकं वाचिकं मानसिकं यत् तपस्तव गुरोर्वर्तते तदसुराद्युपद्रवाभावात् निष्कण्टकं कच्चित् ! ॥ ५ ॥

( हिन्दी ) शरीर, मन और वचन से निरन्तर एकत्रित किया हुआ ऋषिका तीन प्रकारका तप जो इन्द्रके भी धैर्य को डिगा सकता है वह कहीं विघ्नोंसे नष्ट तो नहीं हुआ ? ॥ ५ ॥

आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥६॥

( अन्वयः ) आधारबन्धप्रमुखैः, प्रयत्नैः सुतनिर्विशेषं, संवर्धितानां वः, श्रमच्छिदां, आश्रमपादपानां, वाय्वादिः उपप्लवः, न, कच्चित् ॥६॥

( टीका: ) आधारबन्धप्रमुखैः=आलवालनिर्माणादिभिः, प्रयत्नैः=उपायैः, सुतनिर्विशेषं=पुत्रसदृशं, संवर्धितानां=वृद्धिं प्रापितानां, श्रमच्छिदां=मार्गखेदापहारिणां, वः=युष्माकं, आश्रमपादपानां=आश्रमतरूणां, वाय्वादिः=पवनदावानलादिः, उपप्लवः=उपद्रवः, "तु" न कच्चित्=नास्तिकिम् ॥ ६ ॥

(समासः) आधारस्य बन्धः आधारबन्धः, स एव प्रमुखो येषां ते तैः सुतेभ्यः निर्गतो विशेषो यस्मिन् कर्मणि तत् यथा स्यात्तथेति सुतनिर्विशेषं । श्रमं छिन्दन्तीति तेषाम् । आश्रमस्य पादपा आश्रमपादपास्तेषां । वायुः आदिर्यस्य सः ॥६॥

( सरलार्थः ) आलवालनिर्माणजलदानादिभिरुपायैः सुतवत्संवर्धितानामाश्रमतरूणां दावानलाद्युपद्रवस्तु न जायते कच्चित् ॥६॥

( हिन्दी ) मेंड बांधकर जल आदि के सिञ्चन द्वारा रक्षा किये गये तथा पथिकों के श्रमको मिटानेवाले आपके आश्रमवृक्ष, पवन आदि से नष्ट तो नहीं हो रहे हैं ॥ ६ ॥

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥ ७ ॥

( अन्वयः ) क्रियानिमित्तेषु, अपि, कुशेषु, मुनिभिः, वत्सलत्वात्, अभग्नकामा; तदङ्कशय्याच्युतनाभिनाला, मृगीणां, प्रसूतिः अनघा, कच्चित् ॥ ७ ॥

(टीका) क्रियानिमित्तेषु=यागाद्यनुष्ठानसाधनेषु अपि, कुशेषु-दर्भेषु, मुनिभिः=ऋषिभिः, वत्सलत्वात्=मृगस्नेहात्, अभग्नकामा=अप्रतिहताभिलाषा, तदङ्कशय्याच्युतनाभिनाला=मुनिजनक्रोडरूपतल्पविगलितनाभिनाला, मृगीणां=हरिणीनां, प्रसूतिः=प्रसवः, "प्रसूतिः प्रसवे श्च्योते" इत्यमरः, अनघा=अव्यसना, "दुःखरहिता" कच्चित्।

( समासः ) क्रिया निमित्तं येषां ते क्रियानिमित्ताः तेषु । वत्सलस्य भावो वत्सलत्वं तस्मात् । न भग्नः कामो यस्याः सा अभग्नकामा । तेषामङ्कास्तदङ्काः, तदङ्का एव शय्यास्तदङ्कशय्याः, तासु च्युतानि नाभिनालानि यस्याः सा । प्रसूयत इति प्रसूतिः । नास्ति अघो यस्याः सा ॥ ७ ॥

( सरलार्थः ) मुनयः सद्यः प्रसूतान् यान् मृगशावकान् क्रोडे निधाय रक्षन्ति येषां च नाभिनालानि तेषामङ्केषु एव प्रस्खलन्ति, येषां भक्षणाभिलाष, होमनिमित्तेषु अपि कुशेषु मुनिभिः नैव निवार्य्यत एवं भूतास्ते हरिणशिशवः तपोवने कुशलिनो वर्तन्ते कच्चित् ? ॥ ७ ॥

( हिन्दी ) यज्ञ के लिए रक्खे हुए कुशोंके चरने मे भी स्नेहके कारण, नहीं रोकी जाने वाली ऋषि की गोद में नाल गिराने वाली हरिणों की सन्तान सकुशल तो है ? ॥ ७ ॥

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितॄणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥ ८ ॥

( अन्वयः ) यैः, नियमाभिषेकः, निर्वर्त्यते, येभ्यः, पितॄणां, निवापाञ्जलयः, निर्वर्त्यन्ते, उञ्छषष्ठाङ्कितसैकतानि, वः, तानि, तीर्थजलानि शिवानि, कच्चित् ।८

(टीका) यैः=तीर्थजलैः, नियमाभिषेकः=नित्यस्नानादिः, निर्वर्त्यते=निष्पाद्यते येभ्यः=जलेभ्यः, पितॄणां=अग्निष्वात्तादिपितॄणां, निवापाञ्जलयः=तर्पणाञ्जलयः, "पितृदानं निवापः स्यात्" इत्यमरः, निर्वर्त्यन्ते=निष्पाद्यन्ते, †उञ्छषष्ठाङ्कितसैकतानि=

†मुनयो हि राज्ञामुद्देशेन देयं षष्ठ भागं तीर्थतीरे प्रक्षिपन्ति, तथाच श्रुतिः—
"यस्मादारण्यका अप्युञ्छषष्ठभागं निर्वापयन्ति । योऽस्मान् पालयेतितस्म इदमुपतिष्ठताम्" ॥ इति ॥

कुशूलकुम्भधान्यो वा त्र्याहिकः श्वस्तनोऽपि वा । जीवेद्वापि शिलोञ्छे, श्रेयानेषाम्परस्परा । इति याज्ञवल्क्यः ।

प्रकीर्णोद्धृतषष्ठभागचिन्हितपुलिनानि, "राजग्राह्यषष्ठभागलक्षितपुलिनानि" इति वा तीर्थजलानि=नद्यादितीर्थपयांसि, शिवानि=बाधरहितानि, कच्चित्=वर्तन्ते किम् ।८।

( समासः ) नियमस्याभिषेक इति नियमाभिषेकः । निवापस्याञ्जलय इति निवापाञ्जलयः । उञ्छानां षष्ठैः अङ्कितानि सैकतानि येषां तानि ॥ ८ ॥

( सरलार्थः ) येषु तीर्थेषु भवन्तो नित्यस्नानादिक्रियां सम्पादयन्ति येभ्यश्च पितॄणां तर्पणाञ्जलयो निष्पाद्यन्ते एवम्भूतानि तटेषु राजदेयषड्भागशोभमानानि तीर्थजलानि बाधरहितानि सन्ति किम् ? ॥ ८ ॥

( हिन्दी ) जिन तीर्थों में नित्यस्नान किया जाता है जिनसे पितरों का तर्पण किया जाता है वे उञ्छके छठे भाग से चिन्हित तटवाले तीर्थजल कल्याण युक्त तो हैं ? ॥ ८ ॥

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

( अन्वयः ) कालोपपन्नातिथिकल्प्यभागं, वन्यं वः शरीरस्थितिसाधनं, नीवारपाकादि, जानपदैः, न, आमृश्यते, कच्चित् ॥ ९ ॥

( टीका ) कालोपपन्नातिथिकल्प्यभागं=वैश्वदेवावसानागताभ्यागतकल्पनीयांशं "उचितावसरप्राप्तातिथिसेवासम्पादकं" इत्यर्थः, वन्यं=वनोत्पन्नं, वः=युष्माकं, शरीरस्थितिसाधनं=जीवितसाधनोपायभूतं, नीवारपाकादि=श्यामकादिधान्यं, जानपदैः =ग्रामादागतैः, कडङ्गरीयैः=गोमहिषादिभिः, न आमृश्यते=न भक्ष्यते, कच्चित्=किम् ।

( समासः ) काले उपपन्नाः कालोपपन्नाः, कालोपपन्नाश्च ते अतिथयश्चेति कालोपपन्नातिथयः, तेभ्यः कल्प्या भागा यस्य तत् । वने भवं वन्यं । शीर्यत इति शरीरं, तस्य स्थितिरिति शरीरस्थितिः तस्य साधनमिति शरीरस्थितिसाधनम् । पच्यत इति पाकः, नीवाराणां पाकः नीवारपाकः, स आदिर्यस्य तत् । जनाः पद्यन्ते गच्छन्ति यत्र असौ जनपदः, तस्माद् आगतैः । कडङ्गरं अर्हन्तीति कडङ्गरीयास्तैः॥

(सरलार्थः) अवसरप्राप्तानाम् अतिथीनां सेवासम्पादनयोग्यं भवतां च जीवन-निर्वाहकारणं वनोत्पन्नं नीवारश्यामकादिधान्यं गोमहिषादयो न भक्षयन्ति कच्चित् ॥

( हिन्दी ) उचित समय पर आये हुए अतिथियों के सत्कार करने योग्य और आपके जीवन-रक्षा के कारणीभूत वन में उत्पन्न अन्न, तृण आदि खाने-वाले पशुओं से नाश तो नहीं किये जाते हैं ॥ ९ ॥

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय।
कालोह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥

( अन्वयः ) 'किञ्च' त्वं प्रसन्नेन, 'सता' महर्षिणा, सम्यक्, विनीय, गृहाय, अनुमतः, अपि? हि, ते, सर्वोपकारक्षमं, द्वितीयं, आश्रमं; सङ्क्रमितुं, अयं कालः, "वर्तते" ॥ १० ॥

( टीका ) किञ्च, त्वं प्रसन्नेन=सन्तुष्टेन, "सता" महर्षिणा=महामुनिना वरतन्तुना, सम्यक्=यथाशास्त्रं, विनीय=शिक्षयित्वा "अध्याप्य" इति वा, विद्यामुपदिश्य" इत्यर्थः, गृहाय=गृहस्थाश्रमं प्रवेष्टुं, अनुमतः=अनुज्ञातः, "प्राप्ताज्ञः" इत्यर्थः, अपि=किम्, हि=यस्मात् कारणात्, ते=तव, सर्वोक्षपकारक्षमं=ब्रह्मचर्यवानप्रस्थयत्युपकारसमर्थं, द्वितीयं आश्रमं=गृहस्थाश्रमं, संक्रमितु=प्राप्तुमित्यर्थः, वा, अयं=एषः, कालः=समयः, वर्तते, ॥ १० ॥

( समासः ) महांश्चासौ ऋषिश्च महर्षिः, तेन। सर्वेषां उपकार इति सर्वोपकारः तत्र क्षमम् ॥ १० ॥

( सरलार्थः ) भवतो गुरुः त्वां वेदशास्त्राणि सम्यगध्याप्य गृहं गन्तुं आज्ञापितवान् किम्। यतोऽयं समयः सर्वेषाम् आश्रमाणाम् उपकारकं गार्हस्थ्यं कर्म कर्तुं। समुचितो वर्तते ॥ १० ॥

( हिन्दी ) भलीभाँति वेदविद्या पढ़ाकर ऋषि ने प्रसन्न मन से आपको घर जाने की आज्ञा दी है क्या? क्योंकि आपका यह समय सभी आश्रमोंके उपकार करनेमें समर्थ गृहस्थाश्रम में जाने का है ॥ १० ॥

तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि सम्भावयितुं वनान्माम्।

(अन्वयः) अर्हतः, तव, अभिगमेन, मे, मनः, न, तृतम्, "किन्तु" नियोगक्रियया, उत्सुकं, "अस्ति" "तथा त्वं" अपि, शासितुः, गुरोः, आत्मना, वा, मां, संभावयितुं, वनात्, प्राप्तः असि ॥ ११ ॥

(टीका) अर्हतः=पूज्यस्य. तव=भवतः अभिगमेन=आगमनमात्रेण, मे=मम, मनः=मानसं, न तृप्तं=न सन्तुष्टं, "किन्तु" नियोगक्रियया=आज्ञाकरणेन, उत्सुकं=

क्षयथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः। इति मनुः।

प्रकीर्णोद्धृतषष्ठभागचिन्हितपुलिनानि, "राजग्राह्यषष्ठभागलक्षितपुलिनानि" इति वा तीर्थजलानि=नद्यादितीर्थपयांसि, शिवानि=बाधरहितानि, कच्चित्=वर्तन्ते किम् ।८।

( समासः ) नियमस्याभिषेक इति नियमाभिषेकः । निवापस्याञ्जलय इति निवापाञ्जलयः । उञ्छानां षष्ठैः अङ्कितानि सैकतानि येषां तानि ॥ ८ ॥

( सरलार्थः ) येषु तीर्थेषु भवन्तो नित्यस्नानादिक्रियां सम्पादयन्ति येभ्यश्च पितॄणां तर्पणाञ्जलयो निष्पाद्यन्ते एवम्भूतानि तटेषु राजदेयषड्भागशोभमानानि तीर्थजलानि बाधरहितानि सन्ति किम् ? ॥ ८ ॥

( हिन्दी ) जिन तीर्थों में नित्यस्नान किया जाता है जिनसे पितरों का तर्पण किया जाता है वे उञ्छके छठे भाग से चिन्हित तटवाले तीर्थजल कल्याण युक्त तो हैं ? ॥ ८ ॥

नीवारपाकादि कडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् ।
कालोपपन्नातिथिकल्प्यभागं वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥

( अन्वयः ) कालोपपन्नातिथिकल्प्यभागं, वन्यं वः शरीरस्थितिसाधनं, नीवारपाकादि, जानपदैः, न, आमृश्यते, कच्चित् ॥ ६ ॥

( टीका ) कालोपपन्नातिथिकल्प्यभागं=वैश्वदेवावसानागताभ्यागतकल्पनीयांशं "उचितावसरप्राप्तातिथिसेवासम्पादकं" इत्यर्थः, वन्यं=वनोत्पन्न, वः=युष्माकं, शरीरस्थितिसाधनं=जीवितसाधनोपायभूतं, नीवारपाकादि=श्यामकादिधान्यं, जानपदैः =ग्रामादागतैः,कडङ्गरीयैः=गोमहिषादिभिः, न आमृश्यते=न भक्ष्यते, कच्चित्=किम् ।

( समासः ) काले उपपन्नाः कालोपपन्नाः, कालोपपन्नाश्च ते अतिथयश्चेति कालोपपन्नातिथयः, तेभ्यः कल्प्या भागा यस्य तत् । वने भवं वन्यं । शीर्यत इति शरीरं, तस्य स्थितिरिति शरीरस्थितिः तस्य साधनमिति शरीरस्थितिसाधनम् । पच्यत इति पाकः, नीवाराणां पाकः नीवारपाकः, स आदिर्यस्य तत् । जनाः पद्यन्ते गच्छन्ति यत्र असौ जनपदः, तस्माद् आगतैः । कडङ्गरं अर्हन्तीति कडङ्गरीयास्तैः॥

(सरलार्थः) अवसरप्राप्तानाम् अतिथीनां सेवासम्पादनयोग्यं भवतां च जीवननिर्वाहकारणं वनोत्पन्नं नीवारश्यामकादिधान्यं गोमहिषादयो न भक्षयन्ति कच्चित् ॥

( हिन्दी ) उचित समय पर आये हुए अतिथियों के सत्कार करने योग्य और आपके जीवन-रक्षा के कारणीभूत वन में उत्पन्न अन्न, तृण आदि खानेवाले पशुओं से नाश तो नहीं किये जाते हैं ॥ ६ ॥

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय।
कालोह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥ १० ॥

( अन्वयः ) 'किञ्च' त्वं प्रसन्नेन, 'सता' महर्षिणा, सम्यक्, विनीय, गृहाय, अनुमतः, अपि ? हि, ते, सर्वोपकारक्षमं, द्वितीयं, आश्रमं, सङ्क्रमितुं, अयं कालः, "वर्तते" ॥ १० ॥

( टीका ) किञ्च, त्वं प्रसन्नेन = सन्तुष्टेन, "सता" महर्षिणा = महामुनिना वरतन्तुना, सम्यक् = यथाशास्त्रं, विनीय=शिक्षयित्वा "अध्याप्य" इति वा, विद्यामुपदिश्य" इत्यर्थः, गृहाय = गृहस्थाश्रमं प्रवेष्टुं, अनुमतः = अनुज्ञातः, "प्राताज्ञः" इत्यर्थः, अपि=किम्, हि=यस्मात् कारणात्, ते = तव, सर्वोक्षपकारक्षमं=ब्रह्मचर्यवानप्रस्थयत्युपकारसमर्थं, द्वितीयं आश्रमं=गृहस्थाश्रमं, संक्रमितु = प्राप्तुमित्यर्थः, वा, अयं = एषः, कालः = समयः, वर्तते, ॥ १० ॥

( समासः ) महांश्चासौ ऋषिश्च महर्षिः, तेन। सर्वेषां उपकार इति सर्वोपकारः तत्र क्षमम् ॥ १० ॥

( सरलार्थः ) भवतो गुरुः त्वां वेदशास्त्राणि सम्यगध्याप्य गृहं गन्तुं आज्ञापितवान् किम्। यतोऽयं समयः सर्वेषाम् आश्रमाणाम् उपकारकं गार्हस्थ्यं कर्म कर्तुं समुचितो वर्तते ॥ १० ॥

( हिन्दी ) भलीभाँति वेदविद्या पढ़ाकर ऋषि ने प्रसन्न मन से आपको घर जाने की आज्ञा दी है क्या ? क्योंकि आपका यह समय सभी आश्रमोंके उपकार करनेमें समर्थ गृहस्थाश्रम में जाने का है ॥ १० ॥

तवार्हतो नाभिगमेन तृप्तं मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा प्राप्तोऽसि सम्भावयितुं वनान्माम्।

(अन्वयः) अर्हतः, तव, अभिगमेन, मे, मनः, न, तृप्तम्, "किन्तु" नियोगक्रियया, उत्सुकं, "अस्ति" "तथा त्वं" अपि, शासितुः, गुरोः, आत्मना, वा, मां, संभावयितुं, वनात्, प्राप्तः असि ॥ ११ ॥

(टीका) अर्हतः=पूज्यस्य. तव=भवतः अभिगमेन=आगमनमात्रेण, मे = मम, मनः=मानसं, न तृप्तं=न सन्तुष्टं, "किन्तु" नियोगक्रियया=आज्ञाकरणेन, उत्सुकं=

---

क्षयथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः। इति मनुः।

सोत्कण्ठं "अस्ति" "तथा त्वं" अपि, शासितुः=शासकस्य गुरोः, आज्ञया=आदेशेन, आत्मना=स्वतः, वा, मां संभावयितु=गौरवान्वितं कर्तुं, "अनुग्रहीतुं" इति वा, वनात्=तपोवनात्, प्राप्तः=आगतः, असि ॥ ११ ॥

( समासः ) अर्हतीति अर्हन् तस्य । नियोगस्य क्रियेति नियोगक्रिया, तया । शास्तीति शास्ता, तस्य । ११ ।

( सरलार्थः ) भवतां केवलमागमनेनैव न मे सन्तोषो भवति आज्ञापालनार्थमुत्सुकोऽयञ्जनस्तदनुगृह्यताम् । ११ ।

( हिन्दी ) मुझे कृतार्थ करनेके लिये आप गुरुजी की आज्ञासे अथवा अपनी इच्छासे आये हुए हैं ? मेरा मन केवल आपके आने ही से प्रसन्न नहीं होता है किन्तु आज्ञापालन करनेके लिए अत्यन्त उत्कण्ठित है । ११ ।

इत्यर्घ्यपात्रानुमितव्ययस्य रघोरुदारामपि गां निशम्य ।
स्वार्थोपपत्तिं प्रति दुर्बलाशस्तमित्यवोचद्वरतन्तुशिष्यः ॥ १२ ॥

( अन्वयः ) अर्घ्यपात्रानुमितव्ययस्य, रघोः, इतिं, उदारां, गां, निशम्य, वरतन्तुशिष्यः, स्वार्थोपपत्तिं, प्रति, दुर्बलाशः "सन्" इति अवोचत् । १२ ।

( टीका ) अर्घ्यपात्रानुमितव्ययस्य=मृण्मयपूजाभाजनावलोकनज्ञातसर्वस्वत्यागस्य, रघोः=राज्ञः, इति=उक्तप्रकारां, गां=वाणीं, निशम्य=आकर्ण्य, वरतन्तुशिष्यः=कौत्सः, स्वार्थोपपत्तिं=गुरुदक्षिणार्थमर्थोपार्जनं प्रति, दुर्बलाशः=भग्नाशः, "सन्" तं=रघुं, इति=वक्ष्यमाणं वचनम् अवोचत्=उवाच ॥ १२ ॥

( समासः ) अर्घ्यपात्रेण अनुमितः व्ययो यस्य तस्य । वरतन्तोः शिष्य इति वरतन्तुशिष्यः । स्वस्य अर्थः स्वार्थः, तस्य उपपत्तिस्ताम् । दुर्बला आशा यस्य सः

( सरलार्थः ) कौत्सः इत्थं वाचम् आकर्ण्य मृण्मयभाजनान्यवलोक्य च तस्य निर्धनत्वमनुमाय स्वार्थसिद्धौ भग्नाशः सन् तत्प्रत्युक्तवान् । १२ ।

( हिन्दी ) कौत्स, मिट्टी के पूजापात्र से ही उसका निर्धनत्व जानकर और कोरी उदारवाणी ही सुनकर गुरुदक्षिणाके लिए अर्थ प्राप्ति में निराश हो इस प्रकार बोला । १२ ।

सर्वत्र नो वार्तमवेहि राजन्नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥ १३ ॥

( अन्वयः ) हे राजन् !, "त्वं" सर्वत्र, नः, वार्तं अवेहि, त्वयि, नाथे,

"सति" प्रजानां, अशुभं, कुतः "वर्तते" "हि" सूर्ये, तपति, लोकस्य दृष्टेः, आवरणाय, तमिस्रा, कथं, कल्पेत ॥ १३ ॥

(टीका) हे राजन् !=हे नृप ! "त्वं" सर्वत्र=गुर्वाश्रमतरुप्रभृतिषु, नः=अस्माकं, वार्तं=स्वास्थ्यं, अवेहि=जानीहि, त्वयि=भवति, नाथे=ईश्वरे, 'सति' प्रजानां अशुभं=अकल्याणं, 'कुतः' 'सम्भाव्यते' सूर्ये=भास्करे, तपति=भासमाने, 'सति' लोकस्य=जनस्य, दृष्टेः=दृशः, आवरणाय=आच्छादनाय, तमिस्रा=तमस्ततिः, कथं कल्पेत=दृष्टिमाच्छादयितुं कथं समर्था भवेदित्यर्थः ॥ १३ ॥

( समासः ) राजते शोभतेऽसौ राजा, तत्सम्बुद्धौ ॥ १३ ॥

(सरलार्थः) सूर्ये उदिते तत्तेजसा नष्टोऽन्धकारः पुनर्दृष्टिपथं यथा न आयाति तथैव त्वयि शासितरि सति त्वत्तेजसा चिराय विलयं गतं प्रजोपद्रवादिरूपं दुःखमस्माभिर्लेशतोऽपि न अनुभूयते ॥१३॥

(हिन्दी) सूर्य के उदय होने पर अन्धकार जैसे नष्ट हो जाता है, हेराजन् आपके शासक होनेपर प्रजाका असङ्गल भी उसी प्रकार नष्ट हो गया॥

भक्तिः प्रतीच्येषु कुलोचिता ते पूर्वान्महाभाग तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥१४॥

(अन्वयः) प्रतीच्येषु, भक्तिः ते, कुलोचिता, हे महाभाग ! तया, पूर्वान्, अतिशेषे, व्यतीतकालः, अहं, अर्थिभावात्, त्वां, अभ्युपेतः, इति, मे, विषादः

( टीका ) प्रतीच्येषु=पूज्येषु भक्तिः=अनुरागः, ते तव, कुलोचिता=कुलाभ्यस्ता, 'अभ्यस्तेऽप्युचितं न्याय्यम्' इति यादवः, "अतः" हे महाभाग=हे-उत्कृष्टभाग्यशालिन्!, "त्वं" तया=भक्त्या, पूर्वान्=पूर्वजान्, अतिशेषे=अतिवर्तसे, "अतिक्रमसे" वा, अहं, व्यतीतकालः=अतिक्रान्तसमयः, "सन्" अर्थिभावात्=याचकभावात्,=त्वां=भवन्तं, अभ्युपेतः=समागतः इति=एवम्भूतः, 'भ्रष्टावसरप्राप्तिरूपः' मे=मम, 'मनसि' विषादः=खेदः, "अस्ति" ॥ १४ ॥

( समासः ) कुले उचितेति कुलोचिता । व्यतीतः कालो यस्यासौ । अर्थिनो भावोऽर्थिभावस्तस्मात् ॥ १४ ॥

( सरलार्थः ) हे महात्मन् ! "पूज्येषु भक्त्या वर्तितव्यम्" इति ते कुलव्यवहारः, तमेव व्यवहारं सम्यगाचरता भवता स्वपूर्वपुरुषा अपि अतिवर्तिताः । यच्च समयमतीत्य साम्प्रतमहमागतोऽस्मि अयमेव मे मनसि महान् विषादः ॥ १४ ॥

(हिन्दी) पूज्यों में भक्ति करना तेरे कुल का नियम है। इस नियम के पालन करने में सर्वदा सावधान रहने के कारण तूं अपने पूर्वजों से भी बढ़ा चढ़ा है, परन्तु मैं तेरे पास याचना करनेके लिये समय बिताकर आया इसीका यही मुझे, विशेष खेद है ॥ १४ ॥

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः ॥१५॥

(अन्वयः) हे नरेन्द्र !, तीर्थप्रतिपादितर्द्धिः, शरीरमात्रेण, तिष्ठन्, "त्वं" आरण्यकोपात्तफलप्रसूतिः, स्तम्बेन, अवशिष्टः, नीवारः, इव, आभासि ॥१५॥

(टीका) हे नरेन्द्र != हे राजन् ! तीर्थप्रतिपादितर्द्धिः = सत्पात्रदत्त-सम्पत्तिः शरीरमात्रेण = केवलेन वपुषा, तिष्ठन् = वर्तमानः, "त्वं" आरण्यकोपात्तफलप्रसूतिः = मुनिप्रमुखगृहीतसस्यः, स्तम्बेन = काण्डेन अवशिष्टः=उर्वरितः, नीवारः=धान्यविशेषः, इव, आभासि = शोभसे ।१५॥

(समासः) तीर्थेषु प्रतिपादिता ऋद्धिर्येन सः । शीर्यत इति शरीरं, शरीरमेव शरीरमात्रं तेन । तिष्ठतीति तिष्ठन् । अरण्ये भवा आरण्यकाः तै उपात्ता फलमेव प्रसूतिर्यस्य सः । १५ ।

(सरलार्थः) मुनिभिः गृहीतफलाः नीवारगुल्माः यथा शोभन्ते तथैव हे राजन् ! सत्पात्रसमर्पितसकलधनस्त्वमपि शोभसे ॥ १५ ॥

(हिन्दी) हे राजन् ! वनवासियों द्वारा फल तोड़ लेनेपर केवल शाखा रूप में बचेहुए नीवार धानके वृक्ष जिस तरह शोभते हैं, उसी तरह सत्पात्रोंमें सपूर्ण धन दानदेकर केवल शरीरमात्रसे स्थित तूं भी सुशोभित हो रहा है

स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥१६॥

[अन्वयः] भवान्, एकनराधिपः "सन्" मखजं, अकिञ्चनत्वं व्यनक्ति, "तत्" स्थाने । हि, सुरैः पर्यायपीतस्य, हिमांशोः कलाक्षयः, वृद्धेः श्लाघ्यतरः, भवति ॥१६॥

[टीका] भवान्, एकनराधिपः=सार्वभौमः "सन्" मखजं=यज्ञजन्यं, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः, अकिञ्चनत्वं = निर्धनत्व, व्यनक्ति =प्रकटयति, "इति यत्; तत्" स्थाने=युक्तं, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः हि = यस्मात् कारणात्, सुरैः = देवैः, पर्यायपीतस्य=क्रमपीतस्य, हिमांशोः=

चन्द्रस्य, †कलाक्षयः=कलाह्रासः, "कृशत्वं" इति वा, वृद्धेः=वृद्ध्यपेक्षया, श्लाघ्यतरः=श्रेष्ठतरः, भवतीति शेषः। १६।

( समासः ) अधिपातीत्यधिपः, नराणामधिप इति नराधिपः, एकश्चासौ नराधिप इति एकनराधिपः। मखाज्जातमिति मखजम्। न विद्यते किञ्चन यस्य सः अकिञ्चनः, तस्य भावस्तत्वम्। पर्यायेण पीतस्तस्य। हिमा अंशवो यस्य तस्य। कलानां क्षय इति कलाक्षयः। अतिशयेन श्लाघ्य इति श्लाघ्यतरः॥ १६॥

( सरलार्थः ) देवैः क्रमशः पीतस्य चन्द्रमसः क्षीणत्वं अपि यथा गौरवमेव आवहति तथैव यागदानर्जनितं भवतामपि निर्धनत्वं गौरवास्पदमेव वर्तते॥ १६॥

( हिन्दी ) जैसे देवताओं द्वारा बारी बारी से पानकिये हुए चन्द्रमा की कला का ह्रासभी उसकी शोभा को ही बढाता है घटाता नहीं, उसी तरह यज्ञ से उत्पन्न हुआ आपका निर्धनत्व भी आपकी शोभाही बढाता है॥ १६॥

तदन्यतस्तावदनन्यकार्यो गुर्वर्थमाहर्तुमहं यतिष्ये।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि॥१७॥

( अन्वयः ) तत्, तावत्, अनन्यकार्यः, अहं, अन्यतः, गुर्वर्थं, आहर्तुं, यतिष्ये, ते, स्वस्ति, अस्तु, चातकः, अपि, निर्गलिताम्बुगर्भं, शरद्घनं, न अर्दति॥

( टीका ) तत्=तस्मात्कारणात्, तावत्, अनन्यकार्यः=कार्यान्तररहितः, अहं, अन्यतः=अन्यस्मात् वदान्यात्, गुर्वर्थं=गुरुधनं, आहर्तुं=अर्जयितुं, यतिष्ये=प्रयतिष्ये, ते=तुभ्यं, स्वस्ति=शुभं, अस्तु=भवतु, चातकः=सारङ्गः, "अथ सारङ्गश्चातकः स्तोककः समाः" इत्यमरः, ‡अपि, निर्गलिताम्बुगर्भं=वारिशून्यं, शरद्घनं=शरत्कालीनमेघं, न अर्दति=न याचते। १७।

( समासः )नास्ति गुरुदक्षिणामन्तरेण अन्यत्कार्यं यस्य सः। गुरवे अर्थमिति गुर्वर्थम्। निर्गलितः अम्बु एव गर्भो यस्मात् सः तं, शरदो घनः शरद्घनस्तम्॥

( सरलार्थः ) अहमसमये समागतोऽस्मि, साम्प्रतं भवतां समीपे किञ्चिदपि न

---

† "धर्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव॥" इति कामन्दकीये।
शुक्लप्रतिपदि सर्वे क्षीणमपि चन्द्रं नमस्कुर्वन्ति, यदुक्तं किराते—
'प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्" इति॥
‡अपिशब्दश्चातकस्य जलदैकशरणत्वसूचनार्थः।

वर्तते, अतोऽन्यस्मात् दातुः सकाशात् गुरुदक्षिणार्थं अर्थं आदातुं प्रयतिष्ये चातकोऽपि निजलं जलधरं नैव याचते पुनः का कथा मनुष्याणाम् ॥ १७ ॥

( हिन्दी ) इस कारण केवल गुरुदक्षिणा ही के लिए आया हुआ मैं गुरुके लिए धन की याचना अन्य किसी दानी से करूँगा । तुम्हारा कल्याण होवे, जल रहित शरदृतु के मेघ की प्राथना चातक भी नहीं करता ॥१७॥

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन्! गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त॥१८

(अन्वयः) एतावद्, उक्त्वा, प्रतियातुकामं, महर्षेः, शिष्यं, नृपतिः, निषिध्य, हे विद्वन्!' त्वया, गुरवे, प्रदेयं वस्तु, किं कियत्, वा, 'अस्ति' इति तं अन्वयुङ्क्त॥

( टीका ) एतावत्=एतावन्मात्रं, उक्त्वा=कथयित्वा, प्रतियातुकामं=गन्तुकामं "प्रस्थानोद्यतं" महर्षेः=वरतन्तोः, शिष्यं=छात्रं, "कौत्सं" नृपतिः=रघुः, निषिध्य= निवार्य, हे विद्वन् !=हे पण्डित ! त्वया=भवता, गुरवे=उपाध्यायाय महर्षिणे वरतन्तवे, प्रदेय=दानयोग्यं, वस्तु, किं=किमात्मकं, कियद्—वा=किम्परिमाणं वा अस्ति, इति=इत्थं, तं=कौत्सं, अन्वयुङ्क्त=अपृच्छत् ॥ १८ ॥

(समासः) प्रतियातुं=गन्तुं कामोऽभिलाषो यस्य सः तं प्रदातुं योग्यं प्रदेयम्।

( सरलार्थः ) एवं कथयित्वा प्रस्थानाभिलाषिणं कौत्सं रघुः निवार्य सविनय मुवाच "अयि वेदविदां वर ? तव गुरुदक्षिणा किंरूपा कियती च तस्याः संख्या वर्तते ॥ १८ ॥

( हिन्दी ) इस प्रकार कहकर सफल मनोरथ न होने के कारण दूसरे दानी के पास जाते हुए कौत्स को रोककर रघुने यह पूछा कि "हे विद्वन्! गुरु के निमित्त आपको क्या वस्तु और कितनी देनी है ॥ १८ ॥

ततो यथावद् विहिताध्वराय तस्मै स्मयावेशविवर्जिताय ।
वर्णाश्रमाणां गुरवे स वर्णी विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

( अन्वयः ) ततः, यथावत्, विहिताध्वराय, स्मयावेशविवर्जिताय, वर्णाश्रमाणां, गुरवे, तस्मै, विचक्षणः, वर्णी, सः प्रस्तुतं, आचचक्षे ॥ १९ ॥

(टीका) ततः=तदनन्तरं, यथावत्=यथाविधि, विहिताध्वराय=कृतयज्ञाय""यज्ञः सवोऽध्वरो यागः" इत्यमरः, स्मयावेशविवर्जिताय=गर्वावेशशून्याय, वर्णाश्रमाणां= ब्राह्मणादिब्रह्मचर्यादीनां, गुरवे=नियामकाय, "तद्धर्मप्रतिष्ठापकत्वात्" वर्णी

स्युर्ब्राह्मणादयः" इति तथा 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये' इति चामरः, तस्मै=रघवे, विचक्षणः=विद्वान्, वर्णी=ब्रह्मचारी, "वर्णिनो ब्रह्मचारिणः"इत्यमरः सः=कौत्सः, प्रस्तुतं=प्रकृतं, "गुरुदक्षिणारूपं वस्तु" आचचक्षे=आख्यातवान् ।

( समासः ) विहितः अध्वरो येन स्वः तस्मै । स्मयस्य गर्वस्य संरम्भस्य च वा आवेशः तेन विवर्जितः तस्मै । वर्णाश्च आश्रमाश्चेति वर्णाश्रमाः, तेषां ॥ १९ ॥

( सरलार्थः ) तदनन्तरं ब्रह्मचारी कौत्सः यथाशास्त्रं कृतयज्ञानुष्ठानं निरभिमानिनं तं रघुं प्रकृतविषयं कथयामास ॥ १९ ॥

( हिन्दी ) अनन्तर निरभिमानी, यथाविधि यज्ञ करने वाले रघु को विद्वान् ब्रह्मचारी ने अपना प्रयोजन कहा ॥ १९ ॥

समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत्पुरस्तात् ॥२०॥

(अन्वयः) समाप्तविद्येन, मया, महर्षिः, गुरुदक्षिणायै, विज्ञापितः, अभूत्, सः, चिराय, अस्खलितोपचारां, तां, मे, भक्तिं, एव, पुरस्तात्, अगणयत् ॥

(टीका) समाप्तविद्येन=प्राप्तचतुर्दशविद्येन, मया=कौत्सेन, महर्षिः=महामुनिः, "वरतन्तुः" गुरुदक्षिणायै=गुरुदक्षिणाऽङ्गीकरार्थं,विज्ञापितः=प्रार्थितः, अभूत्= आसीत्, सः=गुरुः "च" चिराय=बहुकालं,अस्खलितोपचारां=नियतपादसंवाहना, दिरूपपरिचर्यां, तां=कष्टसाध्यां, मे=मम, भक्तिं एव=सेवामेव, पुरस्तात्= प्रथमं, "आदौ" अगणयत्=परिगणितवान् ॥ २० ॥

( समासः ) समाप्ता परिपूर्णा चतुर्दश विद्या यस्य सः तेन । गुरवे दक्षिणा गुरुदक्षिणा तस्यै । अस्खलित उपचारः पादप्रक्षालनादिरूपो यस्यां सा तां । महांश्चासौ ऋषिश्च महर्षिः । २० ॥

[सरलार्थः] विद्यां समधीत्य गुरुदक्षिणार्थं प्रार्थितो गुरुः प्रकृतया सेवयैव तुतोष, दक्षिणास्वरूपं तदतिरिक्तं किमपि नाकथयत् ।. २० ॥

( हिन्दी ) मैंने गुरुजी से विद्या पढ़कर गुरुदक्षिणा के लिए उनसे प्रार्थना की परन्तु उन्होंने बहुत काल तक की हुई मेरी सेवा को ही दक्षिणा मानी । २० ॥

निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाऽहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

(अन्वयः) निर्बन्धसञ्जातरुषा, गुरुणा, अर्थकार्श्यं, अचिन्तयित्वा, अहं, इ
उक्तः, "त्वं" विद्यापरिसङ्ख्यया, वित्तस्य, चतस्रः, दश, च, कोटीः, मे, आ

(टीका) निर्बन्धसञ्जातरुषा=अतिप्रार्थनया जातक्रोधेन, गुरुणा=आचार्येण
अर्थकार्श्यं=निर्धनत्वं, अचिन्तयित्वा=अविचार्य, अहं, इति=वक्ष्यमाणप्रकारेण
उक्तः=कथितः, "यत्" "त्वं" विद्यापरिसङ्ख्यया=विद्यासङ्ख्याऽनुसारेण
वित्तस्य=धनस्य, चतस्रः, दश, च कोटीः=चतुर्दशकोटीः, मे=मह्यं, आहर=आन

(सरलार्थः) वारंवारं दक्षिणाग्रहणार्थमत्यन्तमनुरुद्धो गुरुः मम दीनाम
स्थां अविचार्य्यैव चतुर्दशकोटिमितसुवर्णमानयेत्यवोचत् ॥ २१ ॥

[हिन्दी] बार बार पूछने के कारण गुरुजी ने क्रोध में आकर मेरे धनाभ
को न सोचते हुए चौदह विद्या की संख्या के अनुसार चौदह करोड़ रुपये ला
के लिए कहा ॥२१॥

सोऽहं सपर्याविधिभाजनेन मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे सम्प्रति नोपरोद्धुमल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

[अन्वयः] सः अहं, सपर्याविधिभाजनेन, भवन्तं, प्रभुशब्दशेषं, मत्वा
श्रुतनिष्क्रयस्य, अल्पेतरत्वात् सम्प्रति, उपरोद्धु न, अभ्युत्सहे ॥२२॥

[टीका] सः, अहं=कौत्सः, सपर्याविधिभाजनेन=पूजानुष्ठानपात्रेण, भव
=त्वां, प्रभुशब्दशेषं=राजशब्दाऽवशिष्टं, मत्वा=विचार्य, श्रुतनिष्क्रयस्य=शास्त्रमूल
स्य, "श्रुतं शास्त्रावधृतयोः" इत्यमरः, अल्पेतरत्वात्=अत्यधिकत्वात्, सम्प्रति
अधुना, उपरोद्धुं=निर्बन्धुं न अभ्युत्सहे=नैव अभिलषामि । २२ ॥

[समासः] सपर्याया विधिरिति सपर्याविधिः, तस्य, भाजनं तेन । प्र
इति शब्द एव शेषो यस्य सः तं । श्रुतस्य निष्क्रयस्तस्य । अल्पादितर इ
अल्पेतरः, तस्य भावोऽल्पेतरत्वं तस्मात् ॥ २२ ॥

[सरलार्थः] सोऽहमिदानीं राजशब्दमात्रावशेषैश्वर्यं भवन्तं किं निवेदयामि मे गु
दक्षिणा बहुला वर्तते, भवतः धनागारं च इदानीं धनशून्यं, अतएव तुभ्यं वक्तुं नोत्स

[हिन्दी] इसलिए अब मैं इस अर्घ्यपात्र के देखनेसे ही आपको नाम मा
का राजा समझता हूं । विद्या का मूल्य अधिक होने के कारण अब आपसे इ
सम्बन्ध में और कुछ कहना नहीं चाहता । २२॥

इत्थं द्विजेन द्विजराजकान्तिरावेदितो वेदविदां वरेण।
एनोनिवृत्तेन्द्रियवृत्तिरेनं जगाद भूयो जगदेकनाथः। २३॥

[ अन्वयः ] वेदविदां, वरेण, द्विजेन, इत्थं आवेदितः द्विजराजकान्तिः, एनोनिवृत्तेन्द्रियवृत्तिः जगदेकनाथः, एनं, भूयः ; जगाद। २३॥

[टीका] वेदविदां=वेदविचक्षणानां "मध्ये" वरेण=श्रेष्ठेन; "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये" इत्यमरः, †द्विजेन=विप्रेण, इत्थं=उक्तप्रकारेण, आवेदितः=निवेदितः, द्विजराजकान्तिः=चन्द्रप्रभाभासुर, एनोनिवृत्तेन्द्रियवृत्तिः=पापपराङ्मुखेन्द्रियव्यापारः, जगदेकनाथः=जगत्प्रभुः "रघुः" एनं=कौत्सं, भूयः=पुनः, जगाद=उवाच

[ समासः ] विदन्ति धर्ममेभिरिति वेदाः ऋग्यजुःसामादयः, तान्विदन्तीति वेदविदस्तेषां। द्वाभ्यां=जन्मसंस्काराभ्यां जायत इति द्विजः तेन। द्विजानां राजेति द्विजराजः तस्य कान्तिरिव कान्तिर्यस्यासौ। इन्द्रियाणां वृत्तिरिति इन्द्रियवृत्तिः, एनसः निवृत्ता इन्द्रियवृत्तिर्यस्य सः। एकश्चासौ नाथ इति एकनाथः; जगत एकनाथ इति जगदेकनाथः॥ २३॥

( सरलार्थः ) वैदिकेषु मुख्यतरेण कौत्सेन इत्थं निवेदितो रघुः पुन उवाच॥

( हिन्दी ) इस भांति वेद जानने वालों में श्रेष्ठ ब्राह्मण कौत्स से कहा गया रघु उसे फिर बोला॥ २३॥

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्।
गतो वदान्यान्तरमित्ययं मे माभूत्परीवादनवावतारः॥ २४॥

( अन्वयः ) श्रुतपारदृश्वा, गुर्वर्थं ; अर्थी, रघोः, सकाशात्, कामं, अनवाप्य वदान्यान्तरं, गतः, इति, अयं; मे, परीवादनवावतारः; माभूत्॥ २४॥

( टीका ) श्रुतपारदृश्वा=शास्त्रपारगामी गुर्वर्थं=गुरुदक्षिणार्थं अर्थी=याचकः, रघोः=राज्ञः, सकाशात्, कामं=मनोरथं, अनवाप्य=अप्राप्य, वदान्यान्तरं=दात्रन्तरं; गतः=प्राप्तः, इति=इत्थं, अयं=एषः, मे=मम, परीवादनवावतारः=अपवादनूतनाविर्भावः, "नवीनो नूतनो नवः" इत्यमरः, माभूत्=माऽस्तु॥ २४॥

( समासः ) श्रुतस्य पारं दृष्टवान् इति श्रुतपारदृश्वा। अर्थः प्रयोजनमस्यास्तीति अर्थी। नवश्चासौ अवतारो नवावतारः, परीवादस्य नवावतार इति परीवादनवावतारः।

†जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते।

( सरलार्थः ) वेदादिविद्यापारङ्गतः कौत्सः गुरुदक्षिणार्थं धनं आदातुं रघुसमीपं प्राप्तः, परन्तु धनाभावतया असफलमनोरथो भूत्वा अन्यत्र गत इति मे निन्दाया नवावतारो माभूत् ॥ २६ ॥

(हिन्दी) "गुरुदक्षिणाके अर्थ कौत्स रघुके पाससे असफल मनोरथ हो दूसरे दाताके पास गया" यह निन्दाका नया अवतार मेरे लिये न हो ॥ २४ ॥

स त्वं प्रशस्ते महिते मदीये वसँश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन्यावद्यते साधयितुं त्वदर्थम् ॥ २५ ॥

( अन्वयः ) सः; त्वं, महिते, प्रशस्ते, मदीये, अग्न्यगारे, चतुर्थः, अग्निः, इव, वसन्; द्वित्राणि, अहानि, सोढुं, अर्हसि, यावत्, त्वदर्थं, साधयितुं यतिष्ये।

( टीका ) सः, त्वं, महिते=पूजिते, प्रशस्ते=मनोहरे, मदीये, अग्न्यगारे=त्रेताग्निशालायां, चतुर्थः, अग्निः=वन्हिः, इव, वसन्=निवसन्, द्वित्राणि=द्विनिसङ्ख्यकानि, अहानि=दिनानि, सोढुं अर्हसि=योग्योऽसि, हे अर्हन्!=हे मान्य! "अर्हतौ जिनसन्मान्यौ" इति यादवः, यावत्=यावत्कालपर्यन्तं, त्वदर्थं=त्वत्प्रयोजनं, साधयितुं=निष्पादयितुं यतिष्ये=यत्नं करिष्ये ॥ २५ ॥

(समासः) मम इदं मदीयं, तस्मिन् । अग्नेः अगारमिति अग्न्यगारं तस्मिन् । वसतीति वसन् । द्वे त्रीणि वा द्वित्राणि । अर्हतीति तत्सम्बुद्धौ हे अर्हन् ! तव अर्थमिथि त्वदर्थम् ॥ २५ ॥

( सरलार्थः ) अतस्त्वं मदीयेऽग्निमन्दिरे द्वित्राणि दिनानि प्रतीक्षस्व, यावदहं गुरुदक्षिणार्थं धनमानेतुं यत्नं करोमि ॥ २५ ॥

( हिन्दी ) हे विद्वन् ! आप मेरे पवित्र अग्निहोत्र स्थान में चौथे अग्नि के समान दो तीन दिन रहें तब तक मैं आपके अर्थकी सिद्धिका उपाय करता हूं" ।

तथेति तस्यावितथं प्रतीतः प्रत्यग्रहीत्सङ्गरमग्रजन्मा ।
गामात्तसारां रघुरप्यवेक्ष्य निष्क्रष्टुमर्थं चकमे कुबेरात् ॥ २६ ॥

( अन्वयः ) अग्रजन्मा, प्रतीतः "सन्" तस्य, अवितथं सङ्गरं, तथा, इति, प्रत्यग्रहीत्, रघुः, अपि, गां, आत्तसारां, अवेक्ष्य, कुबेरात्, अर्थं, निष्क्रष्टुं चकमे ॥ २६ ॥

( टीका ) अग्रजन्मा=ब्राह्मणः, "कौत्सः" प्रतीतः=हृष्टः, "सन्" तस्य=रघोः, अवितथं=अमोघं, सङ्गरं=प्रतिज्ञां, तथा इति=तथास्तु इति, "अङ्गीकृत्य" इत्यर्थः, प्रत्यग्रहीत्=स्वीचकार, रघुः, अपि, गां=भूमिं, "दिग्विजयेन" आत्तसारां =गृहीतधनां, अवेक्ष्य=ज्ञात्वा, कुबेरात्=धनदात्, अर्थं=धनं, निष्क्रष्टुं= आहर्तुं; चकमे=इयेष ॥ २६ ॥

( समासः ) अग्रे जन्म यस्यासौ अग्रजन्मा । आत्तः सारो यस्याः सा तां ।

( सरलार्थः ) कौत्सः तस्य प्रतिज्ञां स्वीचकार रघुरपि दिग्विजये वसुधां वसुरिक्तामवलोक्य कुवेराद्धनमाहर्तुं इयेष ॥ १६ ॥

( हिन्दी ) "ऐसा ही हो" यह कह कौत्स ने उसकी प्रतिज्ञा स्वीकार की। रघुने भी पृथ्वी निर्धन देख कुवेर से धन लेने की इच्छा की ॥ २६ ॥

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ॥ २७ ॥

( अन्वयः ) वसिष्ठमन्त्रोक्षणजात्, प्रभावात्, उदन्वदाकाशमहीधरेषु, मरुत्सखस्य, बलाहकस्य, इव, तद्रथस्य गतिः नहि, विजघ्ने ॥ १७ ॥

( टीका ) वसिष्ठमन्त्रोक्षणजात्=वसिष्ठर्षिमन्त्रप्रोक्षणसम्भवात्, प्रभावात्= सामर्थ्यात्, उदन्वदाकाशमहीधरेषु=उदध्याकाशपर्वतेषु, मरुत्सखस्य=वायुमित्रस्य, बलाहकस्य=मेघस्य, इव तद्रथस्य=रघुरथस्य, गतिः=सञ्चारः, न विजघ्ने=न विहता यथा मेघस्य गतिः क्वापि न हन्यते तथैव अस्य रथस्यापि न हन्यते स्म ॥ २७ ॥

( समासः ) वसिष्ठस्य मन्त्रेण उक्षणं वसिष्ठमन्त्रोक्षणं, तस्माज्जातस्तस्मात् । उदकानि सन्त्यत्रेति उदन्वान्, आसमन्तात्काशन्ते सूर्यादयो यत्रेति आकाशः । महीं धरतीति महीधरः, उदन्वाँश्च आकाशश्च महीधरश्चेति उदन्वदाकाशमहीधरास्तेषु । मरुतः सखा मरुत्सखस्तस्य । तस्य रथ इति तद्रथस्तस्य । २७ ॥

( सरलार्थः ) यथा मेघः, सुहृदः पवनस्य साहाय्येन सर्वत्रैव स्वेच्छानुसारं विचरति तथैव महर्षेः वसिष्ठस्य अभिमन्त्रितसलिलाभिषेकप्रभावेण रघोरपि रथः समुद्रे गगनमण्डले पर्वते सर्वत्रैवाप्रतिहतगतिरासीत् ॥ २७ ॥

( हिन्दी ) वसिष्ठ के अभिमन्त्रित जलके प्रभावसे ही उसके रथकी गति बादलके समान समुद्र-आकाश और पर्वतमें कहीं भी रुकने वाली न थी। २७॥

अथाधिशिष्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसम्भावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

(अन्वयः) अथ, प्रदोषे, प्रयतः, रघुः, सामन्तसम्भावनया, एव, कैलासनाथं, तरसा, जिगीषुः, "सन्" कल्पितशस्त्रगर्भं, रथम्, अधिशिश्ये ॥ २८ ॥

(टीका) अथ=अनन्तरं, प्रदोषे=रजनीमुखे, प्रयतः=धीरः, रघुः, सामन्तसम्भावनया=कतिपयग्रामपतिभावनया, एव कैलासनाथं=कुबेरं; तरसा=बलेन, जिगीषुः=विजिगीषुः 'सन्' कल्पितशस्त्रगर्भं=सज्जितशस्त्रमध्यं, रथं=स्यन्दनं अधिशिश्ये=अधिष्ठि

(समासः) समन्तात् भवः सामन्तः, तस्य सम्भावना इति सामन्तसम्भावना तया। के=जले लासो लसनमस्येति कैलासः=स्फटिक, तस्य अयमिति कैलासः, तस्य नाथस्तं। कैलाशनाथं। जेतुमिच्छुः जिजीषुः। कल्पितानि शस्त्राणि गर्भे यस्य सः

(सरलार्थः) रघुः सामान्यभूपतिधिया कुबेरं विजिगीषुः रथं शस्त्रादि सज्जीकृत्य तत्रैव निशां निनाय ॥ २८ ॥

(हिन्दी) रघुने कुबेर को साधारण राजा की तरह जीतने की इच्छा शस्त्रों को रथ में रखवाकर वह रात उसी में बिताई ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोशगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥

(अन्वयः) प्रातः प्रयाणाभिमुखाय, तस्मै, कोषगृहे, नियुक्ताः "जनाः" सविस्मयाः, "सन्तः" कोषगृहस्य, मध्ये नभस्तः, पतितां हिरण्मयीं, वृष्टिं शशंसुः

(टीका) प्रातः=प्रभाते, प्रयाणाभिमुखाय=प्रस्थानोन्मुखाय, तस्मै=रघ †कोषगृहे=भाण्डारागारे नियुक्ताः=स्थापिताः 'अधिकृताः" "जनाः" सविस्मयाः साश्चर्याः, "सन्तः" कोषगृहस्य=भाण्डारागारस्य, मध्ये, नभस्तः=आकाशात् पतितां=स्खलितां, हिरण्मयीं=सुवर्णमयीं, वृष्टिं=वर्षणं, शशंसुः=कथयामासुः॥२

(समासः) विस्मयेन सहिताः सविस्मयाः। हिरण्यस्य विकारो यस्याः सा त प्रयाणस्य अभिमुख इति प्रयाणाभिमुखस्तस्मै। कोषस्य गृहमिति कोषगृहं तस्मिन्

---

†मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः। धर्मार्जितोऽव्ययसहः कोषः कोष सम्मितः। धर्महेतोस्तथार्थाय भृत्यानाम्भरणाय च। आपदर्थञ्च संरक्ष्यः को कोषवता सदा। श० चि०

(सरलार्थः) सुवर्णमयीं वृष्टिमवलोक्य साश्चर्याः भाण्डागारिकाः प्रातः प्रस्थानोद्यतं रघुं सुवर्णवर्षणं निवेदयामासुः ॥२९॥

(हिन्दी) प्रातःकाल सुवर्ण वृष्टि देख चकित हुए कोषाध्यक्ष ने आकर कोषगृह में आकाश से सुवर्ण की वृष्टि का होना सुनाया ॥ २९ ॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥३०॥

(अन्वयः) भूपतिः, अभियास्यमानात्, कुबेरात्, लब्धं, वज्रभिन्नं, सुमेरोः, पादं, इव, तं, भासुरहेमराशिं, समस्तं, एव, कौत्साय, दिदेश। ३०।

(टीका) भूपतिः = रघुः, अभियास्यमानात् = अभिगमिष्यमाणात्, कुबेरात् = धनदात्, लब्धं = प्राप्तं, वज्रभिन्नं = कुलिशभिन्नं, सुमेरोः = हेमाद्रेः, पादमिव = प्रत्यन्तपर्वतमिव, तं, भासुरहेमराशिं = देदीप्यमानसुवर्णसमूहं, समस्तं-सम्पूर्णं; एव, कौत्साय=कौत्सनामकब्राह्मणाय, दिदेश=ददौ ॥३०॥

(समासः) अभियास्यतेऽसौ अभियास्यमानः तस्मात्। वज्रेण भिन्न इति वज्रभिन्नस्तम्। हेम्नां राशिरिति हेमराशिः भासुरश्चासौ हेमराशिरिति भासुरहेमराशिः तं॥

(सरलार्थः) कुवेरोऽपि रघोः धनार्थं आक्रमणं ज्ञात्वा रात्रावेव तस्य कोषागारे सुवर्णमयीं वृष्टिं ववर्ष। रघुरपि सुवर्णाचलस्य भिन्नं खण्डमिव तं सकल सुवर्णराशिं कौत्साय ददौ ॥ ३० ॥

(हिन्दी) राजा रघु ने चढ़ाई किये जानेवाले कुवेर से वज्र से काटे सुमेरु के टुकड़ों के समान पाई हुई कान्तिमान वह सम्पूर्ण सोने की राशि कौत्सको देदी ॥ ३० ॥

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

(अन्वयः) गुरुप्रदेयाधिकनिःस्पृहः, अर्थी, अर्थिकामात्, अधिकप्रदः, नृपः, च, "एतौ" तौ, द्वौ, अपि, साकेतनिवासिनः, जनस्य, अभिनन्द्यसत्त्वौ, अभूताम्।

(टीका) गुरुप्रदेयाधिकनिःस्पृहः = गुरुदक्षिणातोऽधिकधने निरभिलाषः, अर्थी = याचकः, अर्थिकामात् = याचकमनोरथात्, अधिकप्रदः = विशेषप्रदः, नृपः = राजा रघुः, च, तौ द्वावपि, साकेतनिवासिनः=अयोध्याधिवासिनः 'साकेतः स्याद-

योध्यायां" इति यादवः, जनस्य = लोकस्य अभिनन्द्यसत्त्वौ = स्तुत्यव्यवसायौ, 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः, अभूताम् = आस्ताम् ॥ ३१ ॥

( समासः ) अर्थः प्रयोजनमस्यास्तीति अर्थी । अर्थिनः काम इति अर्थिकामः तस्मात् । अधिकं प्रददातीत्यधिकप्रदः । साकेते निवसतीति तस्य साकेतनिवासिनः । अभिनन्द्यं सत्त्वं ययोस्तौ । निर्गता विषयेभ्यः स्पृहा तृष्णा यस्यासौ निःस्पृहः, प्रदातुं योग्यं प्रदेयम्, गुरवे प्रदेयं गुरुप्रदेयं तस्मादधिके निःस्पृह इति गुरुप्रदेयाधिकनिःस्पृहः ॥ ३१ ।

( सरलार्थः ) देयचतुर्दशकोटिमितदक्षिणातोऽधिकधनं न स्वीकुर्वन् कौत्सः, तत्प्रार्थनाऽपेक्षया विशेषप्रदः रघुश्च द्वावपि स्वं स्वं निःस्वार्थभावम् औदार्यञ्च प्रकटयन्तौ सन्तौ अयोध्यावासिनः जनस्य साधुवादं प्राप्नुवन्तौ ॥ ३१ ॥

( हिन्दी ) गुरूकी दक्षिणा से अधिक न चाहने वाला भिक्षुक कौत्स और मांगने वाले के मनोरथ से अधिक देनेवाला राजा रघु ये दोनो ही अयोध्यावासियों के सराहने योग्य हुए ॥ ३१ ॥

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन्करेणानतपूर्वकायं सम्प्रस्थितोवाचमुवाच कौत्सः ॥ ३२ ॥

( अन्वयः ) अथ, प्रीतमनाः, महर्षिः कौत्सः सम्प्रस्थितः, "सन्" उष्ट्रवामीशतवाहितार्थं, आनतपूर्वकायं, प्रजेश्वरं, करेण, स्पृशन् वाचं, उवाच ३२

(टीका) अथ, प्रीतमनाः = प्रसन्नमानसः, महर्षिः = महामुनिः, कौत्सः, सम्प्रस्थितः = प्रस्थास्यमानः, "सन्" उष्ट्रवामीशतवाहितार्थं = उष्ट्राश्वप्रापितधनं आनतपूर्वकायं = प्रणतपूर्वशरीरं, प्रजेश्वरं = राजानं रघुं, करेण = हस्तेन, स्पृशन् = स्पर्शं कुर्वन्, वाच = वचनं, उवाच = अवोचत् ॥ ३२ ॥

( समासः ) प्रीतं मनो यस्यासौ प्रीतमनाः । उष्ट्राश्च वाम्यश्च इति उष्ट्रवाम्यः तासां शतैः वाहितः अर्थो येन सः तं । पूर्वं कायस्य पूर्वकायः, आनतः पूर्वकायो यस्य सः तं । ईशितुं शीलमस्येति ईश्वरः, प्रजानामीश्वर इति प्रजेश्वरः तं । स्पृशतीति स्पृशन् ॥ ३२ ॥

( सरलार्थः ) ततः सफलमनोरथः कौत्सः गुरोराश्रमं गच्छन् वाहनैः प्रातरेव प्रेषितधनं प्रणामप्रणतशीर्षं रघुं हस्तेन स्पृशन् इदं वचनम् उवाच ॥ ३२ ॥

( हिन्दी ) सैकड़ों ऊटों और खच्चरों पर लादकर धन भेजे हुए प्रजानाथ रघु को चलते समय प्रसन्न हुए महर्षि कौत्स ने यह कहा ॥ ३२ ॥

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥ ३३ ॥

( अन्वयः ) वृत्ते, स्थितस्य, प्रजानां, अधिपतेः, भूः कामसूः, यदि, अत्र किं, चित्रं, तु, तव, प्रभावः अचिन्तनीयः,येन, "त्वया" द्यौः, अपि मनीषित, दुग्धा॥

( टीका ) †वृत्ते=चतुर्विधराजवृत्ते, स्थितस्य=तिष्ठतः, प्रजानां=जनानां, अधिपतेः=राज्ञः, भूः=भूमिः, कामसूः=मनोरथप्रसूः, यदि=चेत्, अत्र=भूमेः मनोरथप्रसवने, किं=चित्रं=नकिमपि आश्चर्यं, तु=किंतु, तव=ते, प्रभावः=प्रतापः, अचिन्तनीयः=चिन्तयितुमशक्यः, येन=प्रभावेण "त्वया" द्यौः=दिवं, अपि मनीषितं=अभिलषितं, स्वेच्छानुरूपं वा, दुग्धा ॥ ३३ ॥

( समासः ) अधिपातीत्यधिपतिः तस्य। कामान् सूत इति कामसूः। चिन्तयितुं शक्य इति चिन्तनीय, न चिन्तनीयः इति अचिन्तनीयः ॥ ३३ ॥

(सरलार्थः) नीतिमार्गानुगामी नृपः भूमिसकाशात् स्वाभिलषितं वस्तु यल्लभते नैतदाश्चर्यकरं, किन्तु भवान् यत् स्वर्गादपि स्वाभीप्सितं प्राप्तवान् एतदेव अत्यन्तमाश्चर्यकरम् ॥ ३३ ॥

( हिन्दी ) इसमें कोई आश्चर्य नही कि जो धर्मशील राजा की भूमि कामना पूरी करने वाली हो, परन्तु तुम्हारा प्रभाव तो विशेष आश्चर्य कारक है जिसने कि स्वर्ग भी मनमाना दुह लिया। ३३ ॥

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

(अन्वयः) सर्वाणि, श्रेयांसि, अधिजग्मुषः, ते, अन्यत्, आशास्यं पुनरुक्तभूतं ईड्यं, भवन्तं, भवतः, पिता, इव, 'त्वमपि" आत्मगुणानुरूपं, पुत्रं, लभस्व ॥

( टीका ) सर्वाणि=सकलानि, श्रेयांसि=कल्याणानि, "स्वश्रेयसं शिवं भद्रं

---

† न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा। सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥ इतिकामन्दकः ॥ अपिच-गुरोः पूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते।

कल्याणं मङ्गलं शुभम्" इत्यमरः, अधिजग्मुषः=अधिगतवतः, ते=तव, अन्यत्=सुतातिरिक्तं, आशास्यं=आशीःसाध्यं, पुनरुक्तभूतं=पुनरुक्तमिव, "किन्तु" ईड्यं=स्तुत्यं, भवन्तं=त्वां, भवतः=तव, पिता=दिलीपः, इव, "त्वमपि" आत्मगुणानुरूपं=आत्मगुणतुल्यं, पुत्रं=सुतं, लभस्व=प्राप्नुहि ।। ३४ ।।

( समासः ) ईडितुं योग्यः ईड्यस्तं । अनुगतः रूपमित्यनुरूपः, आत्मनः गुणः इत्यात्मगुणस्तेषामनुरूपस्तमात्मगुणानुरूपम् ।। ३४ ।।

( सरलार्थः ) चक्रवर्तिनः तव स्वर्गेऽपि अप्राप्यं किमपि नास्ति अत आशीर्वादोऽपि व्यर्थ एव तथापि इदमेव केवलं अस्तु यद् यथा तव पिता दिलीपः त्वां लेभे तथैव त्वमपि आत्मसदृशं पुत्रं प्राप्नुहि ।। ३४ ।।

[ हिन्दी ] तुम्हें सभी अच्छी वस्तुएँ प्राप्त है इसलिये अब आशीर्वाद देना व्यर्थ है, फिरभी जैसे दिलीप को तुम प्राप्त हुए उसी प्रकार तुम्हारे ही ऐसे गुण वाला पुत्र तुम्हें भी प्राप्त हो ।। ३४ ।।

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मादालोकमर्कादिव जीवलोकः ।।३५।।

[ अन्वयः ] अग्रजन्मा, इत्थं, राज्ञे, आशिषं,प्रयुज्य, गुरोः, सकाशं प्रतीयाय, राजा, अपि, जीवलोकः, अर्कात् आलोकं इव,तस्मात्, आशु, सुतं, लेभे ।

[ टीका ] अग्रजन्मा=ब्राह्मणः, इत्थं=पूर्वोक्तप्रकारेण राज्ञे=रघवे, आशिषं=आशीर्वादं, प्रयुज्य=दत्वा, गुरोः=वरतन्तोः, सकाशं=समीपं, प्रतीयाय=प्रापः, राजा=रघुः, अपि, जीवलोकः= जीवसमुहः, अर्कात्= सूर्यात् आलोकं=प्रकाश इव, तस्मात्=मुनेः, आशिषः प्रयोगात् "कौत्साशीर्वादात्" आशु=शीघ्रं, सुतं=पुत्रं लेभे=प्राप ।। ३५ ।।

( समासः ) अग्रे जन्म यस्य सः ।।३५।।

( सरलार्थः ) वेदवित् कौत्सः राजानं रघुं आशिषं दत्वा गुरोः आश्रममाजगाम, यथा जनाः सूर्यात् प्रकाशं प्राप्नुवन्ति तथैव साराजाऽपि कौत्साशीर्वादप्रभावात् शीघ्रमेव स्वसदृशं पुत्रं प्राप ।।३५।।

( हिन्दी ) इस प्रकार राजा रघुको आशीर्वाद दे कौत्स अपने गुरु के पास पहुँचा, राजा ने भी उस ब्राह्मण के आशीर्वाद से पुत्र पाया ३५

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।
अतः पिता ब्राह्मण एव नाम्ना तमात्मजन्मानमजञ्चकार ॥३६॥

( अन्वयः ) तस्य, देवी, ब्राह्मे मुहूर्ते, कुमारकल्पं कुमारं, सुषुवे, किल। अतः, पिता, ब्रह्मणः, एव, नाम्ना, तं, आत्मजन्मानं अजं, चकार ॥ ३६ ॥

( टीका ) तस्य=रघोः, देवी=कृताभिषेका राज्ञी प्रभावती, "देवी कृताभिषेकायाम्" इत्यमरः, ब्राह्मे=अभिजिन्नामके, मुहूर्ते, कुमारकल्पं=स्कन्दसदृशं, कुमारं=बालं, सुषुवे=प्रासूत किल, अतः=ब्राह्ममुहूर्तोत्पन्नत्वात्, पिता=रघुः, ब्रह्मणः =विधेः, एव, नाम्ना, तं, आत्मजन्मानं=आत्मोद्भवं "पुत्रं" अजं=अजनामकं, चकार=कृतवान् ॥ ३६ ॥

( समासः ) ईसदसमाप्तः कुमारः कुमारकल्पस्तम्। आत्मनः सकाशात् जन्म यस्य सः तम् ॥ ३६ ॥

( सरलार्थः ) रघोः महिषी ब्राह्ममुहूर्ते कार्तिकेयतुल्यं सुतं प्रासूत। अतः तस्य पिता रघुः ब्रह्मणः एव नाम्ना तस्य "अज" इति नाम चकार ॥ ३६ ॥

( हिन्दी ) ब्राह्म ( अभिजित ) मुहूर्त में उसकी रानी ने स्वामीकार्तिक के समान पुत्र जना। इसलिए उसके पिता रघुने ब्रह्मा ही के नाम पर उस पुत्र का "अज" नाम रखा ॥ ३६ ॥

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥३७॥

( अन्वयः ) ओजस्वि, रूपं, तदेव, वीर्यं, तदेव नैसर्गिकं, उन्नतत्वं "च" तदेव। कुमारः, प्रवर्तितः, दीपः, प्रदीपात्, इव स्वात्, कारणात् न बिभिदे ॥

(टीका) ओजस्वि=दीप्तिमत् "ओजो बले च दीप्तौ च" इति विश्वः, रूपं=स्वरूपं, तदेव=पितृसम्बन्धि एव, वीर्यं=शौर्यं, तदेव, नैसर्गिकं=स्वाभाविकं, उन्नतत्वं= उच्चैस्तरत्वं, तदेव=तादृशमेव, किमन्यत्, कुमारः=शिशुः, प्रवर्तितः=प्रज्वालितः दीपः, प्रदीपात्=स्वोत्पादकदीपात् इव, स्वात्=स्वकीयात्, कारणात्=जनकात् "रघोरित्यर्थः" न बिभिदे=भिन्नो नाऽभवत् रघु सदृश एव जात इत्यर्थः ॥ ३७ ॥

( सरलार्थः ) यथा एकस्मात् दीपात् प्रज्वालितोऽन्यः प्रदीपः जनकभूतात्

पूर्वदीपादीपदपि विजातीयरूपो न भवति तथैव अयमपि कुमारः रूपप्रतापादिगुणैः जनकतुल्य एव बभूव ॥ ३७ ॥

(हिन्दी) जैसे एक दीपकसे दूसरा दीपक जलाने पर वह रूप और तेज आदि द्वारा उत्पन्न करनेवाले दीपक के समान ही रहता है, उसी प्रकार कुमार अज भी रूप बल और पराक्रमसे अपने पिता रघुके समान ही हुआ ॥ ३७ ॥

उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषाऽपि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥३८॥

(अन्वयः) गुरुभ्यः, विधिवत्, उपात्तविद्यं, यौवनोद्भेदविशेषकान्तं, तं, साभिलाषा, अपि श्रीः, धीरा, कन्या, पितुः, इव, गुरोः, अनुज्ञां आचकाङ्क्ष ॥३८॥

(टीका) गुरुभ्यः=अध्यापकेभ्यः, 'बहूक्त्या नानाविद्यावाप्तिः' विधिवत्=यथाशास्त्रं, उपात्तविद्यं=प्राप्तचतुर्दशविद्यं, यौवनोद्भेदविशेषकान्तं=तारुण्याविर्भावसुन्दरं, तं=अजं, साभिलाषा=सोत्सुका, अपि, श्रीः=लक्ष्मीः, धीरा=गम्भीरा, कन्या=सुता, पितुः=जनकस्य, इव, गुरोः=रघोः, अनुज्ञां=आज्ञां, आचकाङ्क्ष=इयेष ॥३८॥

(समासः) उपात्ता विद्या येन सः । यौवनस्य उद्भेद इति यौवनोद्भेदः तस्मात् विशेषेण कान्तः तं । अभिलाषेण सह वर्तमाना साभिलाषा ॥३८॥

(सरलार्थं) यथा साध्वी कन्या अभिलषितं प्रियं वरयितुं उत्कण्ठिताऽपि पित्रादिपराधीनत्वात् तेषामनुमतिमिच्छति तथैव राज्यलक्ष्मीरपि यौवनैश्वर्यसम्पन्नं प्रतापिनं अजं वरयितुं सोत्सुकाऽपि निजस्वामिनः रघोः अनुमतिं प्रतीक्षतेस्म ।३८।

(हिन्दी) जैसे कन्या अपने चाहे हुए भी पति को वरनेके लिय पिताकी आज्ञा की प्रतीक्षा करती है उसी प्रकार राज्यलक्ष्मी भी सर्वगुणसंपन्न राजकुमार अजको वरनेकेलिए रघुकी आज्ञा की बाट देखती रही ॥ ३८ ॥

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥३९॥

(अन्वयः) अथ, स्वसुः, इन्दुमत्याः, स्वयंवरार्थं, कुमारानयनोत्सुकेन, क्रथकैशिकानां, ईश्वरेण, भोजेन, आप्तः, दूतः, रघवे, विसृष्टः ॥ ३९ ॥

(टीका) अथ=अनन्तरं स्वसुः–इन्दुमत्याः=इन्दुमतीनामिकायाः, स्वयंवरार्थं स्वयंवराय, कुमारानयनोत्सुकेन=अजानयनोत्कण्ठितेन, क्रथकैशिकानां=विदर्भ-

देशानां, ईश्वरेण=प्रभुणा, भोजेन=भोजनामकेन राज्ञा, आप्तः=स्वकीयः, दूतः =चरः, रघवे=रघुसमीपगमनार्थं, विसृष्टः=प्रेषितः ॥ ३९ ॥

( समासः ) कुमारस्य आनयनं कुमारानयनं तत्र उत्सुकस्तेन । ईषितुं शीलं यस्यासौ ईश्वरः तेन ॥ ३९ ॥

( सरलार्थः ) राजा भोजः स्वभगिन्या इन्दुमत्याः स्वयंवराय अजं आनेतुं दूतं प्रेषयामास ॥ ३९ ॥

( हिन्दी ) कुमार अज को बुलानेके लिये अत्यन्त उत्सुक विदर्भदेश के राजाने बहन इन्दुमती के स्वयंवरके लिए एक अच्छा दूत रघुके पास भेजा।

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशश्च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥४०॥

(अन्वयः) असौ, तं, श्लाघ्यसम्बन्धं, विचिन्त्य, पुत्रं च, दारक्रियायोग्यदशं, "विचिन्त्य" ससैन्यं, एनं ऋद्धां विदर्भाधिपराजधानीं, प्रस्थापयामास ॥४०॥

( टीका ) असौ=रघुः, तं=भोजं, "शुद्धवंशोत्पन्नत्वेन" श्लाघ्यसम्बन्धं=स्तुत्य-सम्बन्धं, विचिन्त्य=विचार्य, पुत्रं=सुतं, "अजं" दारक्रियायोग्यदशं=विवाहसंस्कारोचितवयसं, "विचिन्त्य" ससैन्यं=चमूसहितं, एनं, ऋद्धां=समृद्धां, विदर्भाधिप-राजधानीं=भोजपुरीं, प्रस्थापयामास=प्रेषयामास ॥४०॥

( समासः ) श्लाघ्यः सम्बन्धो यस्य सः तम् । दारक्रियायाः योग्या दशा यस्य सः तं । सैन्येन सहितः ससैन्यस्तं । विदर्भाधिपस्य राजधानी ताम् ॥४०॥

(सरलार्थः) रघुः, भोजवंशेन साकं स्वकुलस्य वैवाहिकः सम्बन्धः प्रशसनीयो भविष्यतीति विचार्य, कुमारं अजञ्च विवाहोचितवयस्कं ज्ञात्वा सेनासमवेतं तं भोजनगरीं प्रति प्रेषयामास ॥ ४० ॥

( हिन्दी ) राजा भोज के वंश के साथ अपना सम्बन्ध उचित समझ रघु ने पुत्र अज को सेनासहित विदर्भनाथ की राजधानी की ओर भेजा ॥ ४० ॥

तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥४१॥

( अन्वयः ) उपकार्यारचितोपचाराः, जानपदोपदाभिः, वन्येतराः, तस्य, मनुजेन्द्रसूनोः, मार्गे, निवासाः, उद्यानविहारकल्पाः, बभूवुः ॥४१॥

(टीका) उपकार्यारचितोपचाराः=पटभवनरचितस्रक्चन्दनाद्युपचाराः, जानपदोपदाभिः=नागरिकदत्तोपायनैः. वन्येतराः=अवन्याः.तस्य=पूर्वोक्तस्य,मनुजेन्द्रसूनोः=अजस्य, मार्गे=पथि, निवासाः=वासानिकाः, उद्यानविहारकल्पाः=उद्यानविहारस्थानसदृशाः, बभूवुः=आसन् ॥ ४१ ॥

(समासः) उपकार्यासु रचिता उपचारा येषु ते । जनपदेभ्य आगता इति जानपदास्तेषां उपदास्ताभिः । मनुजानां इन्द्र इति मनुजेन्द्रः तस्य सूनुस्तस्य । उद्यानान्येव विहारा इति उद्यानविहाराः तत्कल्पा उद्यानविहारकल्पाः ॥ ४१ ॥

(सरलार्थः) मार्गश्रमापनयनार्थं जनपदनिवासिभिरुपहारीकृतानि नृपोचितानि शय्यापटमण्डपादीनि पथि उद्यानविहारसदृशानि सुखदायकानि अभूवन् ॥

(हिन्दी) सजे हुए राजकुमार के पडाव पड़ने के स्थान, मार्ग में प्रजा की भेंटों से नगर के विहारोद्यान के बगीचों के समान हो गये ॥ ४१ ॥

स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतुसैन्यम् ॥४२॥

(अन्वयः) विलङ्घिताध्वा, सः, सीकरार्द्रैः मरुद्भिः, आनर्तितनक्तमाले, नर्मदायाः, रोधसि, क्लान्तं रजोधूसरकेतु, सैन्यं, निवेशयामास ॥ ४२ ॥

(टीका) विलङ्घिताध्वा=उल्लंघितमार्गः, सः=अजः, सीकरार्द्रैः=जलकणभिन्नैः, मरुद्भिः=वायुभिः, आनर्तितनक्तमाले=कम्पितचिरबिल्वाभिधेयवृक्षे, नर्मदायाः=रेवायाः, रोधसि=तीरे, क्लान्तं=श्रान्तं, रजोधूसरकेतु=धूलिधूसरपताकं, सैन्यं, निवेशयामास=स्थापयामास ॥ ४२ ॥

(समासः) विलङ्घितः अध्वा येन सः । सीकरैः आर्द्राः सीकरार्द्राः तैः । आनर्तिताः नक्तमाला यस्मिन् तस्मिन् । रजोभिः धूसराः केतवो यस्य तत् ॥ ४२ ॥

(सरलार्थः) कियन्तं मार्गमतिक्रम्य रघुः, शीतलैः तरङ्गपवनैः कम्पिते नर्मदातटे मार्गश्रमदूरीकरणाय सैन्यं न्यवेशयत् ॥ ४२ ॥

(हिन्दी) कुछ दूर चलकर रघुने नक्तमाल वृक्षों से सुशोभित नर्मदा नदी के तट पर विश्राम के हेतु थकी हुई सेना को ठहराया ॥ ४२ ॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥४३॥

[अन्वयः] अथ, उपरिष्टात् भ्रमद्भिः भ्रमरैः, प्राक्सूचितान्तःसलिलप्रवेशः, निर्धौतदानामलगण्डभित्तिः, वन्यः गजः, सरित्तः, उन्ममज्ज ॥ ४३ ॥

[टीका] अथ = अनन्तरं, उपरिष्टात् = ऊर्ध्वं, भ्रमद्भिः = भ्रमणशीलैः, भ्रमरैः = द्विरेफैः प्राक्सूचितान्तःसलिलप्रवेशः = प्राग्विज्ञापितजलप्रवेशः, निर्धौतदानाऽमलगण्डभित्तिः = क्षालितमदनिर्मलकपोलभित्तिः; वन्यः = आरण्यकः, गजः = मतङ्गजः, सरित्तः, = नर्मदायाः सकाशात्, उन्ममज्ज = उत्थितः ॥ ४३ ॥

[समासः] प्राक्सूचितः अन्तःसलिले प्रवेशो यस्य सः । निर्धौतदाने अतएव अमले गण्डभित्ती यस्य सः ॥ ४३ ।

[सरलार्थः] अनन्तरं कश्चन वन्यो गजः नदीजलाभ्यन्तरात् उत्थितः; तस्य च उन्मज्जनात्प्रागेव तन्मदजलगन्धाकृष्टाः सलिलोपरि गुञ्जन्तः भ्रमराः तस्य सलिलनिमज्जनं कथयामासुः ॥ ४३ ॥

(हिन्दी) जलके ऊपर गूँजते हुए भौरों से पानी के भीतर रहने का अनुमान किया जाने वाला मदजलधुलजाने से उजली कनपटीवाला जंगली हाथी नदी से निकला ॥ ४३ ॥

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।  
नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥४४॥  
संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।  
बभौ स भिन्दन्बृहतस्तरङ्गान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥युग्मम्॥

(अन्वयः) निःशेषविक्षालितधातुना, अपि, नीलोर्ध्वरेखाशबलेन, अश्मविकुण्ठितेन, दन्तद्वयेन ऋक्षवतः तटेषु, वप्रक्रियां, शंसन्, संहारविक्षेपलघुक्रियेण, हस्तेन, सशब्दं, बृहतः, तरङ्गान्, भिन्दन्, तीराभिमुखः, सः, वार्यर्गलाभङ्गे, प्रवृत्तः, इव बभौ ॥ ४४ ॥

(टीका) निःशेषविक्षालितधातुना = अशेषनिर्धौतगैरिकादिधातुना, अपि, नीलोर्ध्वरेखाशबलेन = श्यामोर्ध्वरेखाकर्बुरेण, अश्मविकुण्ठितेन = पाषाणाऽभिघातकुण्ठीकृतेन, दन्तद्वयेन = दन्तयुग्मेन, ऋक्षवतः = तन्नामकपर्वतस्य; तटेषु = तीरेषु, वप्रक्रियां = उत्खातकेलिं, शंसन् = कथयन् ॥ ४५ ॥

(समासः) निःशेषं यथा तथा विक्षालितो धातुर्येन तत् निःशेषविक्षालितधातु,

तेन । ऊर्ध्वाश्च रेखाश्च ऊर्ध्वरेखाः,नीलाश्च ऊर्ध्वरेखाश्च नीलोर्ध्वरेखास्ताभिः शबलं तेन । अश्मभिः विकुण्ठितमश्मविकुण्ठितन्तेन . दन्तयोर्द्वयं दन्तद्वयं तेन ॥४५॥

(टीका) संहारविक्षेपलघुक्रियेण=सङ्कोचनप्रसारणक्षिप्रव्यापारेण, हस्तेन= शुण्डादण्डेन सशब्दं=सघोषं, बृहतः=महतः, तरङ्गान्=कल्लोलान्, भिन्दन्= विदारयन्, तीराभिमुखः=तटाभिमुखः, सः=मतङ्गजः, वार्यर्गलाभङ्गे=गज- बन्धनार्गलाभञ्जने, प्रवृत्तः=तत्परः, इव, बभौ=शुशुभे ॥ ४५ ॥

(समासः) संहारश्च विक्षेपश्च संहारविक्षेपौ, तयोः लघ्वी क्रिया यस्य सः तेन । शब्देन सहितं सशब्दं । भिनत्तीति भिन्दन् । तीरस्य अभिमुखस्तीराभिमुखः वारी (गजबन्धनस्थानं) तस्यां बहिर्गमनरोधार्थं दत्ता अर्गला (विष्कम्भः) तस्याः भङ्गस्तस्मिन् वार्यर्गलाभङ्गे ॥ ४५ ॥

(सरलार्थः) पर्वततटाभिघातसंल्लग्नो दन्तद्वयस्य धातुरागः नदीसलिलाऽव- गाहनेन यद्यपि निःशेषं धौतः आसीत् तथापि नीलरेखाङ्कितौ दन्तौ ऋक्षवतः, पर्वतस्योत्पाटनक्रीडनं अनुमापयतः ॥ ४४ ॥

तीरम्प्रति आगच्छन् स गजः शुण्डादण्डेन नदीतरङ्गान् वारयन् अर्गलायाः भङ्गे प्रवृत्त इव दृश्यतेस्म ॥ ४५ ॥

(हिन्दी) कुछ मुड़े अग्रवाले ऋक्षवान् पर्वत के प्रदेश में वप्रक्रीडा करता हुआ वह हाथी बहुत अच्छा दिखाई देता था, जिसकी दाँतों पर नीले धातुओं की रेखा। उसकी दूनी शोभा बढ़ा रही थी ॥ ४४ ॥

अपनी सूँड़ से बड़े बड़े तरगों को चीरता हुआ वह हाथी गजशाला की अर्गलाको तोड़ने वाले गज के समान शोभा को प्राप्त हुआ । ४५॥

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

(अन्वयः) शैलोपमः, सः, शैवलमञ्जरीणां जालानि, उरसा, कर्षन्, पश्चात्, तटं. उत्ससर्प, पूर्वं, तदुत्पीडितवारिराशिः, सरित्प्रवाहः. "तटं, उत्ससर्प" ।४६।

(टीका) शैलोपमः=गिरितुल्यः, सः=गजः, शैवलमञ्जरीणां=जललीन- वल्लीनां, जालानि=वृन्दानि, उरसा=वक्षःस्थलेन, कर्षन्=आकर्षन् पश्चात्= अनन्तरं, तटं=तीरं, उत्ससर्प=आजगाम, पूर्वं=प्राक्, तदुत्पीडितवारिराशिः

गजोत्पीड़ितजलसमूहः, सरित्प्रवाहः=नदीवेगः "तटं" उत्ससर्प ।। ४६ ।।

( समासः ) शैल उपमा यस्य सः । शैवलानां मञ्जर्यः शैवलमञ्जर्यः तासां । वारीणां राशिरिति वारिराशिः तेन उत्पीड़ितः, वारिराशिस्तदुत्पीडितवारिराशिः । सरितः प्रवाह इति सरित्प्रवाहः ।। ४६ ।।

( सरलार्थः ) पर्वतसदृशाकारः सः गजः उरस्थलेन शैवललतानां जालानि आकर्षन् नदीतीरं आरुरोह, तेन क्षुभितं नदीजलं तु तत्प्रागेव कूलं प्लावयामास ॥

( हिन्दी ) पहाड़ की उपमावाला हाथी शिवाल की लताओंको छाती से खींचता हुआ अपने हिलाये नदी जलके प्रवाहके बाद तटपर पहुँचा । ४६ ।

तस्यैकनागस्य कपोलभित्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥४७॥

(अन्वयः) तस्य एकनागस्य, कपोलभित्योः, जलावगाहक्षणमात्रशान्ता, मद-दुर्दिनश्रीः, वन्येतरानेकपदर्शनेन, पुनः दिदीपे ।। ४७ ।।

(टीका) तस्य=पूर्वोक्तस्य, एकनागस्य=एकाकिनो गजस्य, कपोलभित्योः=गण्ड-प्रदेशयोः, जलावगाहक्षणमात्रशान्ता=नीरमज्जनमुहूर्तनिवृत्ता, मददुर्दिनश्रीः = मदव-र्षलक्ष्मीः, वन्येतरानेकपदर्शनेन=ग्राम्यबहुगजावलोकनेन, पुनः=भूयः, दिदीपे -वबृधे

( समासः ) एकश्चासौ नाग इत्येकनागः, तस्य एकनागस्य । कपोलयोः भित्तीः कपोलभित्तीस्तयोः । जले अवगाहः जलावगाहस्तेन क्षणमात्रं शान्ता । मदस्य दुर्दिनमिति मददुर्दिनं, तस्य श्रीः । वने भवा वन्या तेभ्य इतरा इति वन्येतराः, ते च ते अनेकपाश्चेति वन्येतरानेकपाः. तेषां दर्शनं तेन ।। ४७ ।।

(सरलार्थः) एकनागस्य तस्य गण्डस्थलयोः मदजलवर्षणशोभा नदीनिमज्जनेन शान्ता अपि सेना करीन्द्रदर्शनेन जातस्पर्धया तस्मिन्नेव क्षणे पुनः समुत्पन्नाव भूत

( हिन्दी ) हाथी की कनपटियों में मदजलधारा की शोभा जलके झकोरों से क्षण मात्र शान्त होगई थी परन्तु अज की सेना के गजेन्द्रों के देखने से फिर उत्पन्न हुई ।। ४७ ।।

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्ना सेनागजेन्द्रा विमुखा बभूवुः ॥४८॥

(अन्वयः) सप्तच्छदक्षीरकटुप्रवाहं, असह्यं, तदीयं, मदं, आघ्राय, विलङ्घिता-धोरणतीव्रयत्नाः, सेनागजेन्द्राः, विमुखाः, बभूवुः ।। ४८ ।।

(टीका) सप्तच्छदक्षीरकटुप्रवाहं = विषमच्छदक्षीरकटुप्रसारं, असह्यं=सहनानर्हं, तदीयं = गजसम्बन्धि, मदं = दानजलं, आघ्राय=उपाघ्राय, सेनागजेन्द्राः=चमूह-

स्तिवराः, विलङ्घिताधोरणतीव्रयत्नाः=अगणितहस्तिपकाङ्कुशताडनरूपप्रयासाः "सन्तः" विमुखाः=पराङ्मुखाः, बभूवुः=अभूवन् ॥ ४८ ॥

(समासः) सप्तच्छदस्य क्षीरवत् कटु प्रवाहो यस्य सः तं। तस्य इदं तदीयं। सेनायाः गजेन्द्राः सेनागजेन्द्राः। विलंघितः आधोरणानां तीव्रः यत्नो यैस्ते ॥४८॥

(सरलार्थः) अजगजाः सप्तपर्णवृत्तक्षीरमिव वन्यस्य तस्य गजस्य मदगन्धमाघ्राय उन्मत्ताः सन्त इतस्ततः पलायनं चक्रुः, हस्तिपका अपि पलायमानान् तान् महता अपि प्रयासेन निवारयितुं समर्था न बभूवुः ॥ ४८ ॥

( हिन्दी ) सप्तपर्ण के दूध के समान उस जंगली हाथी के असह्य मदगंध को सूंघकर सेनाके बड़े २ हाथी महावतों के प्रयत्न को व्यर्थ करते हुए भागे ४८।

सच्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥ ४९ ॥

( अन्वयः ) सः, छिन्नबन्धद्रुतयुग्यशून्यं, भग्नाक्षपर्यस्तरथं, रामापरित्राणविहस्तयोधं, सेनानिवेशं, क्षणेन, तुमुलं, चकार ॥ ४९ ॥

( टीका ) सः=हस्ती, छिन्नबन्धद्रुतयुग्यशून्यं=भग्नशृङ्खलापलायिताश्वोष्ट्रवृषभशून्यं, भग्नाक्षपर्यस्तरथं=छिन्नरथाङ्गावयवपतितरथं, रामापरित्राणविहस्तयोधं=स्त्रीसंरक्षणव्याकुलवीरं, सेनानिवेशं=सैन्यशिविरं, क्षणेन=क्षणमात्रेण, तुमुलं=सकुलं, चकार =कृतवान् ॥ ४९ ॥

( समासः ) युगं वहन्तीति युग्याः। छिन्नः, बन्धो यैस्ते छिन्नबन्धाः अत एव द्रुताः इति छिन्नबन्धद्रुताः, ते च ते युग्याश्चेति छिन्नबन्धद्रुतयुग्याः तैः शून्यस्तम्। भग्ना अक्षा येषान्ते भग्नाक्षाः, अत एव पर्यस्ता रथा यस्मिन् सः तम्। रामाणां परित्राणे विहस्ता योधा यस्मिन् सः तम्। सेनायाः निवेश इति सेनानिवेशस्तम् ॥

(सरलार्थः) वन्यगजस्य भयात् सर्वेऽपि अश्वाः सकलं सैन्यसमूहं क्षोभयामासुः

( हिन्दी लगाम तोड़कर भागे हुए घोडों से शून्य, धुरा टूट जानेसे पड़े हुए रथों वाले तथा स्त्रियों की रक्षा में घबड़ाए हुए योद्धाओं वाले सैन्य को उस हाथीने क्षणमात्र में व्याकुल कर दिया ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

( अन्वयः ) वन्यः, करी, नृपतेः, अवध्यः, इति श्रुतवान्, कुमारः, आपतन्तं, तं, निवर्तयिष्यन्, विशिखेन, नात्यायतकृष्टशार्ङ्गः, "सन्" कुम्भे, जघान ॥५०॥

(टीका) वन्यः=आरण्यकः, करी=गजः, नृपतेः=राज्ञः. अवध्यः=अहिंस्यः, इति, श्रुतवान्=ज्ञातवान् कुमारः=अजः, आपतन्तं=आक्रमन्तं "अभिधावन्त" इति वा, तं=गजं, निवर्तयिष्यन्=परावर्तयिष्यन् "नतु मारयिष्यन्" अत एव, नात्यायतकृष्टशार्ङ्गः=नातिदीर्घसमाकृष्टबाणः, "सन्" विशिखेन=बाणेन, कुम्भे=गण्डस्थले, जघान=हतवान् ॥ ५० ॥

(समासः) वने भवो वन्यः। न वध्य इति अवध्यः। आपतीति आपतन् तं। निवर्तयिष्यतीति निवर्तयिष्यन्। शृङ्गस्य विकारः शार्ङ्गं, न अत्यायत कृष्टं शार्ङ्गं येन सः ॥ ५० ॥

(सरलार्थः) "आरण्यकः गजः अवध्यः" इति बहुशः गुरुभ्यः श्रुतवान् कुमारः आक्रमन्तमपि तं गजं न अवधीत्, किन्तु तं परावर्तयितुं धनुरीषदाकृष्य लोहमुखं बाणं तस्य स्कुम्भस्थले चिक्षेप ॥५०॥

(हिन्दी) "जगलका हाथी राजा को न मारना चाहिए" यह जानते हुए राजकुमार अजने अपनी ओर आते हुए उस जगली हाथी को लौटाने की गरज से उसके मस्तक में बाणमारा ॥ ५० ॥

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

(अन्वयः) सः विद्धमात्रः, किल, नागरूपं, उत्सृज्य, तद्विस्मितसैन्यदृष्टः "सन्" स्फुरत्प्रभामण्डलमध्यवर्ति, कान्तं, व्योमचरं, वपुः, प्रपेदे ॥ ५१ ॥

(टीका) सः=करी, विद्धमात्रः=ताडितगात्रः किल, नागरूपं=मतगशरीरं, उत्सृज्य=परित्यज्य, तद्विस्मितसैन्यदृष्टः=देहत्यागरूपव्यापारविस्मयावलोकितः, "सन्" स्फुरत्प्रभामण्डलमध्यवर्ति=प्रोल्लसद्दीप्तिसमूहमध्यवर्ति, कान्तं=सुन्दर, व्योमचरं=नभोविहारि, वपुः=शरीरं; प्रपेदे=प्राप ॥ ५१ ॥

(समासः) विद्ध एव विद्धमात्रः। नागस्य रूपमिति नागरूपं, सेनायां समवेताः सैन्याः, तेन विस्मिताश्च ते सैन्याश्च तद्विस्मितसैन्याः, तद्विस्मितसैन्यैः दृष्टः तद्विस्मितसैन्यदृष्टः,प्रभायाः मण्डलं,प्रभामण्डलं,स्फुरच्च तत्प्रभामण्डलं स्फुरत्प्रभामण्डलं, तस्य मध्यवर्तीति स्फुरत्प्रभामण्डलमध्यवर्ति। व्योम्नि चरतीति व्योमचरं।

[सरलार्थः] सः गजः ताडितमात्र एव निजं गजशरीरं विहाय आकाशसञ्चारि मनोरम दिव्यरूपं प्राप्तवानित्यवलोक्य सर्वे अजसैनिकाः साश्चर्या बभूवुः ॥५१॥

( हिन्दी ) उस हाथी ने घायल होते ही हाथी का रूप त्यागकर आकाशमें गमन करनेकी शक्तिवाला ( गन्धर्वका ) शोभायमान शरीर धारण किया। इससे सैनिकोंने बड़े आश्चर्यसे उसको देखा ।। ५१ ।।

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ।।५२।।

( अन्वयः ) अथ, प्रभावोपनतैः कल्पद्रुमोत्थैः, पुष्पैः, कुमारं, अवकीर्य दशनप्रभाभिः, संवर्धितोरःस्थलतारहारः वाग्मी, उवाच ।। ५२ ।।

( टीका ) अथ=अनन्तरं, प्रभावोपनतैः=प्रतापप्राप्तैः, कल्पद्रुमोत्थैः= कल्पवृक्षसम्भवैः । पुष्पैः=कुसुमैः, कुमारं=अजं, अवकीर्य=अभिवृष्य, दशनप्रभाभिः=दन्तकान्तिभिः, संवर्धितोरःस्थलतारहारः=समेधितवक्षस्तटस्थूलमुक्ताहारः, वाग्मी=वावदूकः "सः" उवाच=जगाद ।। ५२ ।।

( समासः ) कल्पद्रुमेभ्यः उत्थानि, कल्पद्रुमोत्थानि तैः । दशनानां प्रभा दशनप्रभाः ताभिः । उरस्थले तारहार इति उरःस्थलतारहारः, संवर्द्धितः उरःस्थले तारहारो तस्यं सः संवर्द्धितोरःस्थलतारहारः ।। ५२ ।।

[सरलार्थः] दिव्यशरीरी सः स्वप्रभावेण प्राप्तकल्पद्रुमकुसुमानि अजस्योपरि अभिवृष्य हृदयस्थ तमुवाच ।। ५२ ।।

[हिन्दी] तब वह दांतोकी कान्ति से गलेके बड़े २ मोतियों के हारकी शोभा बढ़ाता हुआ प्रभाव से प्राप्त कल्पद्रुमों के पुष्पों को राजकुमार अज के ऊपर बरसाता हुआ बोला । ५२।।

मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ।।५३।।

[अन्वयः] अवलेपमूलात्, मतंगशापात्, मतंगजत्वं, अवाप्तवान्, अस्मि, मां, प्रियदशनस्य, गन्धर्वपतेः, तनूजं, प्रियंवदं, अवेहि ।। ५३ ।।

[ टीका ] अवलेपमूलात्=गर्वहेतुकात्, मतङ्गशापात्=मतङ्गमुनिशापात्, मतङ्गजत्वं=हस्तित्वं, अवाप्तवान्=प्राप्तवान्, अस्मि, मां, प्रियदशनस्य-प्रियदर्शनाभिधेयस्य, गन्धर्वपतेः=गन्धर्वराजस्य, तनूजं=सुत, प्रियंवदं=प्रियंवदाऽभिधेयं, अवेहि=जानीहि ।। ५३ ।।

[समासः] अवलेप एव मूलः अवलेपमूलः तस्मात् । मतङ्गस्य शापो मतङ्ग—

शापस्तस्मात्। मतङ्गजस्य भावो मतङ्गजत्वं। प्रियं दर्शनं यस्य सः तस्य। गन्धर्वाणां पतिरिति गन्धर्वपतिस्तस्य। तनोः जात इति तनूजस्तम्। प्रियं वदतीति प्रियवदस्तम्

[सरलार्थः] एकदा किल ईश्वराराधनावसरे महान् प्रमादो जातः तेन, हेतुना जातक्रोधेन महर्षिणा मतङ्गेन 'त्व गजो भव'' इति शप्तस्तेन मया गजत्वं प्राप्तं, त्व मां प्रियदर्शनस्य गन्धवराजस्य सुतं जानीहि ॥ ५३ ॥

[ हिन्दी ] मेरे अपराध के कारण मतङ्ग ऋषी ने "तू हाथी हो जा" ऐसा मुझे श्राप दिया था! आप मुझे गन्धर्वों के स्वामी प्रियदर्शन का पुत्र प्रियंवद नाम का जानिये ॥ ५३ ॥

सचानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदु तामगच्छत्।
उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिजलस्य ॥ ५४ ॥

[अन्वयः] सः, प्रणतेन, मया, अनुनीतः, "सन्" पश्चात्, मृदुतां, अगच्छत्, हि, जलस्य, उष्णत्वं, अग्न्यातपसम्प्रयोगात्, भवति, यत् शैत्यं, सा प्रकृतिः, वर्तते'

[टीका] सः=महर्षिः मतङ्गः, प्रणतेन=नम्रीभूतेन, मया, अनुनीतः=स्तुतः, "सन्" पश्चात्=अनन्तरं, मृदुतां=शान्ति, अगच्छत्=जगाम, हि=तथाहि, "जलस्य=सलिलस्य, उष्णत्वं=उष्णस्पर्शत्व अग्न्यातपसम्प्रयोगात्=वन्हेः सूर्यस्य च सम्पर्कात्, भवति, यत् शैत्यं=शीतलत्व, सा=शीतलत्वरूपा, "जलस्य" प्रकृतिः—स्वभावः वर्तत इति शेषः ॥ ५४ ।

( समासः ) उष्णस्य भाव उष्णत्वं, अग्नेः आतपस्य वा सम्प्रयोग इति अग्न्यातपसम्प्रयोगस्तस्मात्, शीतस्य भावः शैत्यम् । ५४ ॥

[सरलार्थः]शापानन्तरं भूयोभूयः क्षमाप्रार्थनया स महर्षिः कथञ्चिदनुनीतोऽभवत्॥

( हिन्दी ) फिर पीछे मेरी अत्यन्त प्रार्थना से महर्षि किसी तरह शान्त हुये ॥ ५४ ।

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥५५॥

( अन्वयः ) इक्ष्वाकुवंशप्रभवः, अजः, यदा ते, कुम्भं, अयोमुखेन, भेत्स्यति, तदा, स्वेन, वपुर्महिम्ना, संयोक्ष्यसे, इति, सः, तपोनिधिः, मां, अवोचत् ।५५।

( टीका ) इक्ष्वाकुवंशप्रभवः=इक्ष्वाकुकुलोत्पन्नः " वंशो वेणौ कुले वर्गे" इति विश्वः, अजः, यदा, ते=तव, कुम्भं=मस्तकं, अयोमुखेन=लोहाग्रबाणेन,

भेत्स्यति = छेत्स्यति, तदा, स्वेन = स्वकीयेन, वपुर्महिम्ना = गान्धर्वेण, प्रभावेण "पुनः" संयोक्ष्यसे = संयुक्तो भविष्यसि, इति = इत्थं, सः = पूर्वोक्तः, तपोनिधि = तपस्वी मतंगः, मां अवोचत् = अवादीत् ॥ ५५ ॥

( समासः ) इक्ष्वाकोः वंश इति इक्ष्वाकुवंशः, स प्रभवः उत्पत्तिर्यस्याऽसौ वपुषः महिमा वपुर्महिमा, तेन । तपसां निधिरिति तपोनिधिः ॥ ५५ ॥

( सरलार्थः ) इक्ष्वाकुवंशोत्पन्नः अजः यदा शरेण तव कुम्भस्थलं भेत्स्यति तदा त्वं निजशरीरमाहात्म्यं प्राप्स्यसीति शापमुक्त्युपायमवदत् ॥ ५५ ॥

( हिन्दी ) "इक्ष्वाकु वंशमें पैदा हुआ अज जब तेरा मस्तक भेदेगा, तब अपने इस शरीर को फिर से पावेगा" ऐसा मुझे उन तपोनिधि मतंगऋषि ने कहा ॥ ५५ ॥

संमोचितः सत्त्ववता त्वयाऽहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥५६॥

( अन्वयः ) चिरप्रार्थितदर्शनेन, सत्त्ववता, त्वया, अहं, शापात्, संमोचितः भवतः, प्रतिप्रियं न, कुर्यां, चेत्, मे, स्वपदोपलब्धिः, वृथा, स्यात् ॥ ५६ ॥

( टीका ) चिरप्रार्थितदर्शनेन = सुचिरं दर्शनं प्रतीक्षमाणेन, सत्त्ववता = बलवता । त्वया = भवता, अहं, शापात्, संमोचितः = उन्मोचितः "इदानीं" भवतः = तव, प्रतिप्रियं = *प्रत्युपकारं, न कुर्यां, चेत् = तर्हि, मे = मम, स्वपदोपलब्धिः = स्वस्थानप्राप्तिः, वृथा स्यात् = व्यर्थमेव भविष्यतीत्यर्थः ॥ ५६ ॥

( समासः ) चिरं प्रार्थितं, दर्शनं यस्य सः तेन । सत्त्वं विद्यते यस्यासौ सत्त्ववान् तेन । स्वपदस्य उपलब्धिरिति स्वपदोपलब्धिः ॥ ५६ ॥

( सरलार्थः ) तदारभ्य भवदागमनं प्रतीक्षमाणोऽहमत्र तिष्ठामि । अद्य भवदागमनात् शापमुक्तो जातः । एवं भवता उपकृतोऽहं यदि भवतः प्रत्युपकारं न कुर्यां तदा मे निजपदप्राप्तिर्व्यर्थैव भवेत् ॥ ५६ ॥

( हिन्दी ) तब से आपके दर्शन की इच्छा से मैं यहां रहता हूं, आज बड़े भाग्य से आपके दर्शन होने से मैं शाप से मुक्त हुआ, अब यदि आपका उपकार न किया तो मेरा "गन्धर्व स्थान" पाना ही व्यर्थ होगा ॥ ५६ ॥

---

* उक्तञ्च—प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ।

समोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥५८॥

( अन्वयः ) हेसखे ? प्रयोगसंहारविभक्तमन्त्रं, गान्धर्वं, संमोहनं; नाम, मम, अस्त्रं, आदत्स्व यतः, प्रयोक्तुः, अ रिहिंसा, न, विजयः, च, हस्ते, स्थास्यतीतिशेषः ॥

( टीका ) हेसखे? = हेमित्र !, प्रयोगसंहारविभक्तमन्त्रं = प्रक्षेपणोपसहारभिन्नमन्त्रं, गान्धर्वं = गन्धर्वदेवताकं, संमोहनं = प्रस्वापनं, नाम = प्रसिद्धं, मम = मे, अस्त्रं = आयुधं, आदत्स्व = गृहाण, यतः = यस्मात् अस्त्रात्, प्रयोक्तुः = प्रक्षेपयितुः, अरिहिंसा = शत्रुवधजन्यपातक, न = भविष्यति, विजयः = शत्रुजयोऽपि, हस्ते = करे, हस्तगतविजयो भविष्यतीत्यर्थः ॥ ५७ ॥

( समासः ) प्रयोगे = प्रेरणे, सहारे = उपसंहारे च विभक्तौ = पृथक् पृथक् स्थितौ मन्त्रौ यस्य तत् । समोह्यतेऽनेनेति सम्मोहनम् ॥ ५७ ॥

(सरलार्थः) हेसखे ? प्रयोगे संहारे च भिन्नमन्त्रं संमोहनं नाम मे गन्धर्वास्त्रं गृहाण, येन त्वं शत्रुवधं विनैव जयश्रियं प्राप्स्यसि ॥ ५७ ॥

( हिन्दी ) हे मित्र ? आप छोड़ने और लौटाने में भिन्न २ मन्त्र वाले गन्धर्वसम्बन्धी सम्मोहन नामके मेरे अस्त्रको ग्रहण करो जिससे प्रयोग करनेवाले को वैरियों की हिंसा भी नहीं होगी और विजय हाथों में रहेगा ॥ ५७ ॥

अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥५८॥

( अन्वयः ) 'किञ्च' मां, प्रति, ह्रिया, अलं, यत्, त्वं, 'मां' प्रहरन्, अपि, मुहूर्तं, दयापर, अभूः तस्मात्, उपच्छन्दयति, मयि, त्वया, प्रतिषेधरौक्ष्य, न, प्रयोज्यम् ॥

( टीका ) 'किञ्च' मां, प्रतिं, ह्रिया = शरप्रहरनिमित्तया लज्जया, अलं = विरतो भव "प्रहारलज्जितचित्तो मा भव" यत् = यस्मात्, त्वं, 'मां' प्रहरन्नपि = विध्यन्नपि, मुहूर्तं = क्षणमात्र, दयापरः = कृपापरः, अभूः = आसीः, तस्मात् कारणात्, उपच्छन्दयति = प्रार्थयमाने, मयि, त्वया = भवता, प्रतिषेधरौक्ष्यं = परिहारपारुष्यं, न प्रयोज्यं = न विधेयम् ॥ ५८ ॥

( समासः ) प्रतिषेध एव रौक्ष्यमिति प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

( सरलार्थः ) यच्च, त्वं मयि बाणप्रहारं कृतवान् तेनेदानीं लज्जितो मा भव,

यत:, भवत्प्रदित्तत्राण एव मां पुनः पूर्वावस्थां प्रापयामास, अतोऽहं कृतोपकार त्वां संमोहनास्त्राङ्गीकाराय प्रार्थये,तत्र निषेधरूपं पारुष्यं त्वया न करणीयम्॥५८॥

(हिन्दी) लज्जा मत करो, क्योंकि प्रहार करते हुये भी जब तू क्षणमात्र दयावान हुआ तो अब मुझ प्रार्थी पर निषेधरूप रूखापन करना तुझे उचित नहीं है ॥ ५८ ॥

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥५९॥

(अन्वयः नृसोमः, अस्त्रवित्, सः, तथेति, सोमोद्भवायाः, सरितः, पवित्रं, पयः, उपस्पृश्य, उदङ्मुखः, "सन्" निगृहीतशापात्, तस्मात्, अस्त्रमन्त्रं, जग्राह।

(टीका) नृसोमः = चन्द्रतुल्यः, "पुरुषश्रेष्ठ इत्यर्थः" अस्त्रवित् = अस्त्रज्ञः, सः = अजः, तथा इति = तथास्तु इति, "अङ्गीकृत्य" सोमोद्भवायाः, सरितः = नर्मदायाः, पवित्रं = पुण्यं. पयः=जलं, उपस्पृश्य=आचम्य, उदङ् मुखः=उत्तरास्यः, "सन्" निगृहीतशापात् = निवर्तितशापात्, तस्मात्=प्रियंवदात्, अस्त्रमन्त्रं=संमोहनमन्त्रं. जग्राह = अग्रहीत् ॥ ५९ ॥

(समासः) ना सोम इव नृसोमः । सोम उद्भवो यस्यास्तस्याः । निगृहीतः निवर्तितः शापो गजत्वप्राप्तिरूपो यस्यासौ निगृहीतशापस्तस्मात् । अस्त्रस्य मन्त्र इति अस्त्रमन्त्रस्तम् ॥ ५६ ॥

(सरलार्थः) अजोऽपि "तथास्तु" इति तत्प्रार्थनामङ्गीकृत्य नर्मदाजलमाचम्य उत्तराभिमुखो भूत्वा तस्मात्प्रयोगसंहारसहितं समन्त्रं अस्त्रं गृहीतवान् ॥ ५९ ॥

(हिन्दी) "ऐसाही हो" यह कह उस अस्त्रज्ञानी अज ने उत्तरकी ओर होकर नर्मदाका पवित्र जल आचमन कर उससे अस्त्रमन्त्र ग्रहण किया ॥५६॥

एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥

(अन्वयः) एवं, अध्वनि, दैवयोगात्. अचिन्त्यहेतु, सख्यं आसेदुषोः, तयोः, एकः, चैत्ररथप्रदेशान्, अपरः, सौराज्यरम्यान्, विदर्भान्, ययौ । ६० ॥

(टीका) एवं=इत्युक्तप्रकारेण, अध्वनि=मार्गे, दैवयोगात् = दैवसंयोगात्, अचिन्त्यहेतु = अतर्क्यहेतुकं, सख्यं=मित्रत्वं, आसेदुषोः = प्राप्तवतोः, तयोः = अजगन्धर्वयोः "मध्ये" एकः = गन्धर्वः, चैत्ररथप्रदेशान् = कुवेरोद्यानदेशान्, "अस्योद्यानं चैत्ररथम्" इत्यमरः, अपरः = अजः, सौराज्यरम्यान् =राजन्वत्तया

मनोहरान्, विदर्भान्=विदर्भदेशान्. ययौ=जगाम ॥ ६० ॥

(समासः) अचिन्त्यः हेतुर्यस्य तत्। चैत्ररथस्य प्रदेशास्तान्। सौराज्येन रम्यास्तान्

(सरलार्थः) एवं, पथि सौहार्दं प्राप्तवतोः तयोः मध्ये एकः प्रियंवदः कुवेरोद्यानं ययौ, अपरश्च अजः विदर्भदेशान्प्रति जगाम ॥ ६० ॥

(हिन्दी) इस भांति मार्गमें दैवयोगसे अकस्मात् मित्र होने वाले उन दोनों में से एक गन्धर्व, कुवेरके उद्यानभूमि की ओर गया और दूसरा (अज) सुराज से शोभित विदर्भ देशको गया ॥ ६० ॥

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥

(अन्वयः) नगरोपकण्ठे, तस्थिवांसं, तं, तदागमारूढगुरुप्रहर्षः, क्रथकैशिकेन्द्रः, प्रवृद्धोर्मिः, ऊर्मिमाली, चन्द्रं इव, प्रत्युज्जगाम ॥ ६१ ।

(टीका) नगरोपकण्ठे=नगरसमीपे, तस्थिवांसं=स्थितं, तं=अजं, तदागमारूढगुरुप्रहर्षः=अजागमनसञ्जातमहानन्दः, क्रथकैशिकेन्द्रः=विदर्भभूपः, "इन्दूदये" प्रवृद्धोर्मिः=प्रवृद्धतरंगः, ऊर्मिमाली=समुद्रः, चन्द्रं, इव, प्रत्युज्जगाम=प्रत्युद्गतवान्

(समासः) नगरस्योपकण्ठमिति नगरोपकण्ठं तस्मिन्, तस्य आगमनेन आरूढः गुरुः प्रहर्षो यस्य सः। क्रथकैशिकानां इन्द्र इति क्रथकैशिकेन्द्रः। प्रवृद्धा ऊर्मयो यस्मिन् सः। ऊर्मिरेव माला अस्त्यस्येति ऊर्म्मिमाली ॥ ६१ ॥

(सरलार्थः) यथा इन्दौ उदिते समुद्रः तं आलिंगनाय उच्छलितो भवति, तथैव अजोऽपि यदा नगरसमीपमागतः तदा प्रसन्नाननो भोजराजस्त सम्मानयितुं स्वयं प्रत्युज्जगाम । ६१ ।

(हिन्दी) जैसे चन्द्रोदय होनेपर समुद्र आनन्दित हो उससे मिलनेकेलिये उछलता है वैसेही नगरसमीप ठहरे हुये अजसे विदर्भनाथ अति प्रसन्न हो मिला ६१

प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

(अन्वयः) अग्रयायी, नीचैः, एनं, पुरं, प्रवेश्य, अर्पितश्रीः, तथा, उपाचरत्, यथा, तत्र, समेतः जनः, वैदर्भं, आगन्तुं, "मेने" अजं, गृहेशं, मेने ॥

(टीका) अग्रयायी=सेवया अग्रे गच्छन्, नीचैः=नम्रः "सन्" एनं=अजं, पुरं=नगरं, प्रवेश्य=प्रवेशयित्वा, अर्पितश्रीः=दत्तच्छत्रचामरादिशोभः, तथा=तेन

प्रकारेण, उपाचरत् = उपचरितवान्. यथा = येन प्रकारेण, तत्र = स्वयंवरे, समेतः = समागतः. जनः = लोकः, वैदर्भं = विदर्भाधिपं भोजं, आगन्तुं = अतिथिं, मेने = अमानि, अजं = रघुसुतं "तु" गृहेशं = गृहस्वामिनं मेने ॥ ६२ ॥

( समासः ) अग्रे यातुं शीलं यस्यासौ । अर्पिता श्रीः येन सः । गृहस्य ईशः इति गृहेशः तम् ॥ ६२ ॥

( सरलार्थः ) भोजराजः स्वयं स्वागतं कृत्वा अजं तथा सदकरोत् यथा तत्रस्थो राजसमाजः अजमधीशं मेने भोजराजञ्च अभ्यागतं मेने ॥ ६२ ॥

( हिन्दी ) और उसको नगर में प्रवेश कराकर आगे २ चलते हुए विदर्भनाथने नम्रतापूर्वक उसका ऐसा सम्मान किया जिससे वहां आये हुये और राजाओंने विदर्भराजको पहुना समझा और अजको वहां का अधिपति समझा ॥ ६२ ॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां बाल्यात्परामिव दशां मदनोऽध्युवास ॥

( अन्वयः ) रघुप्रतिनिधिः, सः प्रणतैः तस्य, अधिकारपुरुषैः, प्रदिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां, रम्यां, नवोपकार्यां, बाल्यात्परां, दशां, मदनः, इव, अध्युवास ।

( टीका ) रघुप्रतिनिधिः = रघुसदृशः, सः = अजः, प्रणतैः = प्रणमद्भिः, तस्य = भोजस्य, अधिकारपुरुषैः = अधिकारिभिः, प्रदिष्टां = निर्दिष्टां, प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भां = द्वारभूमिस्थापितमंगलकलशां, रम्यां = रमणीयां, †नवोपकार्य्यां = नूतनपर्णकुटीं, बाल्यात्परां = शैशवादनन्तरां, दशां = अवस्थाम्, मदनः = स्मरः, "कामदेवः" इव, अध्युवास = अधिष्ठितवान् ॥ ६३ ॥

( समासः ) प्रतिनिधीयते तुल्यरूपतया स्थाप्यते इति प्रतिनिधिः, रघुः प्रतिनिधिर्यस्यासौ । अधिकारस्य पुरुषा अधिकारपुरुषास्तैः । प्राग्द्वारस्य वेद्यां विनिवेशितौ पूर्णकुम्भौ यस्यास्तां । नवा चासौ उपकार्येति नवोपकार्या तां ॥ ६३ ॥

(सरलार्थः) यथा मदनः नवयौवनं स्वाधिष्ठानेन सुशोभितं करोति तथैव सः अजोऽपि तं राजभवनं स्वाधिवासेनालञ्चकार ॥ ६३ ॥

( हिन्दी ) द्वारकी वेदी पर रक्खे हुए कलशोंवाली, मनोहर विश्रामशाला में कामदेव के समान रघुके समान युवराज अजने वास किया ॥ ६३ ॥

तत्र स्वयंवरसमाहृतराजलोकं कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव ॥

† तम्बू कनात से घिरा हुआ स्थान ।

( अन्वयः ) तत्र, स्वयंवरसमाहृतराजलोकं कमनीयं, कन्याललाम, लिप्सोः, अजस्य, भावावबोधकलुषा, दयिता,इव निद्रा,रात्रौ, चिरेण, नयनाभिमुखी,बभूव ॥

(टीका) तत्र=वस्त्रनिर्मितराजभवने, स्वयंवरसमाहृतराजलोकं=स्वयंवरसंमिलित-भूपमण्डलं, कमनीयं=स्पृहणीयं, कन्याललाम=कन्यारत्नं, लिप्सोः=लब्धुमिच्छोः, अजस्य, भावावबोधकलुषा=भावपरिज्ञानेनाप्रसन्ना, दयिता = प्रिया, इव, निद्रा = शयनं "स्यान्निद्रा शयनं स्वापः" इत्यमरः, रात्रौ=निशायां, चिरेण = चिरकाला-नन्तरं, नयनाभिमुखी=नयनसंमुखी, बभूव=अभूत् ॥ ६४ ॥

( समासः ) स्वयवरार्थं समाहृतः राजलोको येन तत् । कन्यासु ललाम इति कन्याललाम । भावस्य अवबोध इति भावावबोधः तेन कलुषा । नयनयोः अभि-मुखीति नयनाभिमुखी ॥ ६४ ॥

(सरलार्थः) रमणीयं कन्यारत्नं वीक्ष्य तदवाप्तिं चिन्तयन्नजश्चिरेण निद्रितोऽभवत्

( हिन्दी ) वहां स्वयंवर में राजकन्याको पाने के लिये उत्सुक अज चिन्ता के कारण देर से सो सका ॥ ६४ ॥

तं कर्णभूषणनिपीडितपीवरांसं शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधं प्राबोधयन्नुषसि वाग्भिरुदारवाचः

( अन्वयः ) कर्णभूषणनिपीडितपीवरांसं, शय्योत्तरच्छदविमर्दकृशांगरागं, प्रथितप्रबोधं, तं,सवयसः, उदारवाचः, सूतात्मजाः, उषसि, वाग्भिः, प्राबोधयन् ॥

( टीका ) कर्णभूषणनिपीडितपीवरांसं = कुण्डलपीडया किञ्चिदुन्नतस्कन्धं, शय्योत्तरच्छदविमर्दकृशाङ्गरागं = शय्याप्रच्छदवस्त्रसङ्घर्षणनिमृष्टकस्तूरिकाद्यङ्गरागं, प्रथितप्रबोधं= प्रकृष्टबोधसम्पन्नं, तं=अजं, सवयसः=समानवयस्काः, उदारवाचः= प्रौढगिरः, सूतात्मजाः = बन्दिपुत्राः, उषसि = प्रातःकाले, वाग्भिः = ललितवन्धैः स्तुतिपाठैः, प्राबोधयन् = प्रबोधयामासुः ॥ ६५ ॥

( समासः ) कर्णयोर्भूषणमिति कर्णभूषणं, ताभ्यां निपीडितौ पीवरौ अंसौ यस्य सः तं । शय्यायाः उत्तरच्छदस्य विमर्देन कृशः अङ्गरागो यस्य सः तं । प्रथितः प्रबोधो यस्य सः तं । समानानि वयांसि येषान्ते । उदारा वाचो येषां ते । सूतानां आत्मजा इति सूतात्मजा. ॥ ६५ ॥

( सरलार्थः ) अथ प्रसुप्तस्य अजस्य विशालमंसद्वयं कर्णभूषणसङ्घर्षणाद्रेखा-ङ्कितं जातं, शय्यायाः उपरितनवस्त्रस्य च घर्षणेन कस्तूरिकाद्यङ्गरागः धौतो

बभूव । समतीतायां निशायां मधुरकण्ठाः वन्दिनः मनोहरैः स्तुतिगीतिमङ्गलैः तं अबोधयामासुः ॥ ६५ ॥

( हिन्दी ) सोये हुए अज के कन्धे कर्णभूषण के सङ्घर्ष से कुछ दबसे गये थे। सोकर उठने का समय हो गया था इसलिए मधुरकण्ठ वाले सूतों ने प्रातःकाल स्तुतियों तथा मांगलिक गीत एवं वाद्यों के द्वारा उसे जगाया । ६५।

रात्रिर्गता मतिमतां वर मुञ्च शय्यां धात्रा द्विधैव ननु धूर्जगतो विभक्ता
तामेकतस्तव बिभर्ति गुरुर्विनिद्रस्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥

( अन्वयः ) हे मतिमतां वर ! रात्रिः, गता, शय्यां, मुञ्च, धात्रा, जगतः, धूः, द्विधा, एव, विभक्ता, तां, एकतः, तव, पिता, विनिद्रः, "सन्" बिभर्ति, भवान्, तस्याः, अपरधुर्य्यपदावलम्बी, भव ॥ ६६ ॥

( टीका ) हे मतिमतां वर !=हे विद्वच्छ्रेष्ठ ! रात्रिः=निशा, गता=व्यतीता, शय्यां=पर्य्यङ्कं, मुञ्च=जहिहि, धात्रा=ब्रह्मणा, जगतः=संसारस्य, धूः=कार्य्यभारः, द्विधा एव विभक्ता=विभज्य स्थापिता, तां=धुरं, एकतः=एककोटौ, तव=भवतः, गुरुः=पिता, विनिद्रः=निरलसः, सन्, बिभर्ति=धारयति, भवानपि, तस्याः=धुरः, अपरधुर्य्यपदावलम्बी=इतरभारवाहस्थानावलम्बी, भव ॥ ६६ ॥

(समासः) मतिरस्त्येषां ते मतिमन्तस्तेषां । विगता निद्रा यस्मात् सः । धुरं वहतीति धुर्यः, तस्य पदमिति धुर्यपदं, अपरञ्च तद्धुर्यपदमिति अपरधुर्यपदं तस्य अवलम्बी।

( सरलार्थः ) हे कुशाग्रबुद्ध ! रात्रिः गता, प्रातःकालो जातः, शयनादुत्तिष्ठ, ब्रह्मदेवः पृथ्वीसंरक्षणरूपं कार्यभारं द्विधा विभज्य त्वयि त्वत्पितरि च निहितवान्, भवतः पिता तु निद्रां परित्यज्य स्वकार्यं करोत्येव भवानपि तत्साहाय्यं कर्तुं निद्रां विहाय अपरां धुरं धारय ॥ ६६ ॥

( हिन्दी ) हे सूक्ष्मबुद्धिवाले ! रात बीत गई, सवेरा हो आया, शय्या छोड़ो । विधाताने संसारके भार को दो हिस्सों में बांटा है, जिसके एक हिस्से का भार तेरा पिता निरलस हो उठा रहा है तुम्हा निद्रा छोड़ दूसरी ओर के भार को उठा ६६

निद्रावशेन भवताप्यनवेक्ष्यमाणा पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥

† सुललितगीतेन हि प्रभूणां बोधः क्रियते तथाहि भोजः—
मृदुभिर्मर्दनैः पादे, गीतैर्वा मङ्गलैस्तथा । अतो वा मधुरैर्गानैर्निद्रातो बोधयेत्प्रभुम् ।

( अन्वयः ) निद्रावशेन, भवता, पर्युत्सुकत्वं, अपि, निशि, खण्डिता, अबला, इव, अनवेक्ष्यमाणा "सती" लक्ष्मी, येन, "चन्द्रेण सह" विनोदयति, सः, चन्द्रः, अपि, दिगन्तलम्बी, "सन्" त्वदाननरुचिं विजहाति ॥ ६७ ॥

(टीका) निद्रावशेन-निद्राधीनेन, भवता, पर्युत्सुकत्वमप=त्वय्यनुरक्तत्वमपीत्यर्थः, "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। निशि=निशायां, खण्डिता=भर्तुरन्याऽसङ्गज्ञानकलुषिता, अबला=नायिका, इव, अनवेक्ष्यमाणा=अनिरीक्ष्यमाणा सती, लक्ष्मीः=श्रीः, येन चन्द्रेण सह विनोदयति=विनोदं करोति, सः. चन्द्रोऽपि दिगन्तलम्बी=पश्चिमाशाङ्कतः, "सन्" त्वदाननरुचिं=त्वन्मुखसादृश्यं, विजहाति=त्यजति ॥ ६७ ॥

( समासः ) निद्रायाः वश इति निद्रावशः तेन। दिशां अन्त इति दिगन्तः तं लम्बत इति दिगन्तलम्बी। तव आननं त्वदाननं तस्य रुचिस्ताम् ॥ ६७ ॥

( सरलार्थः ) रात्रौ त्वयि निद्रिते सति मन्ये तव चिरप्रियतमा लक्ष्मीः त्वां निद्रारूपायां कस्याञ्चिन्नायिकायां आसक्तं दृष्ट्वा कोपकषायिताशया भूत्वा स्वमनोविनोदार्थं त्वदाननसदृशं चन्द्रं समाश्रयते। सोऽपि चन्द्रः इदानीं क्षीणप्रभः सन् त्वन्मुखसादृश्यं जहाति, अतस्त्वन्मुखसादृश्यस्य अन्यत्राभावात् सा लक्ष्मीः निराश्रया जाता, इति त्वं तस्या विनोदार्थं तां गृहाण ।। ६७ ॥

( हिन्दी ) सोए हुए तुमको निद्रारूपी किसी दूसरी स्त्री में आसक्त जान कुपित हुई लक्ष्मी तेरे मुख के समान कान्तिवाले चन्द्र का आश्रय करती है, वह चन्द्र प्रभात के समय अस्त हो जाता है अत्र उसका एकमात्र सहारा तूँही है, इसलिये तू उसे ग्रहण कर ॥ ६७ ।

तद्वल्गुना युगपदुन्मिषितेन तावत्सद्यः परस्परतुलामधिरोहतां द्वे।
प्रस्पन्दमानपरुषेतरतारमन्तश्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥६८॥

( अन्वयः ) तत्, अन्तः, प्रस्पन्दमानपरुषेतरतारं, तव, चक्षुः. प्रचलितभ्रमर, पद्मं, च, "इति" द्वे, वल्गुना, युगपत्, तावत्, उन्मिषितेन, सद्यः, परस्परतुला, अधिरोहताम् ॥ ६८ ॥

( टीका ) तत्=तस्मात्कारणात्, अन्तः=मध्ये, प्रस्पन्दमानपरुषेतरतारं=चलन्मनोहरकनीनिकं, तव=ते, चक्षुः=नेत्रं, प्रचलितभ्रमरं=चलद्भृङ्गं, पद्मं=

कमलं, च, "इति" द्वे "अपि" वल्गुना=मनोज्ञेन, युगपत्=एककालमेव; तावद् उन्मिषितेन=उन्मीलितेन, "समकालमेव विकसितेन" सद्यः=तत्क्षणे, परस्परतुलां=अन्योन्यसादृश्यं, अधिरोहतां=प्राप्नुताम् ॥ ६८ ॥

( समासः ) प्रस्पन्दमाना परुषेतरा तारा यस्य तत्। प्रचलिताः भ्रमराः यस्मिन् तत् प्रचलितभ्रमरम् ॥ ६८ ॥

( सरलार्थः ) इदानीं कमलविकाससमय एव त्वमपि यदि निजं नेत्रद्वन्द्वं उन्मीलयसि तदा एककाले एव विकसितं नीलतारकायुतं त्वदीयं नेत्रं, नीलभ्रमरशोभितं पद्मं च एतदुभयमपि परस्परं सादृश्यम्प्राप्नुयाताम् ॥ ६८ ॥

( हिन्दी ) चञ्चल और मनोहर पुतली वाले तेरे नेत्र और भीतर फिरते हुए भौंरेवाले कमल ये दोनों अपने २ सुन्दर विकाशसे परस्पर समानता प्राप्त करें अर्थात् कमल खिल रहा है आप भी अपनी आखें खोलें ॥ ६८ ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां संसृज्यते सरसिजैररुणांशुभिन्नैः।
स्वाभाविकं परगुणेन विभातवायुः सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥

(अन्वयः) विभातवायुः, ते, मुखमारुतस्य, स्वाभाविकं सौरभ्य, परगुणेन, ईप्सुः, इव, अनोकहानां, श्लथं पुष्प, वृन्तात्, हरति, अरुणांशुभिन्नैः, सरसिजैः, संसृज्यते ।

( टीका ) विभातवायुः=प्रभातवायुः, ते=तव मुखमारुतस्य=निश्वासवायोः, स्वाभाविकं=नैसर्गिकं, सौरभ्यं=सौगन्ध्यं, परगुणेन=अन्यदीयगुणेन, ईप्सु=आप्तुमिच्छुः, इव, अनोकहानां=वृक्षाणां, श्लथं=शिथिलं, पुष्पं=कुसुमं, वृन्तात्=प्रसवबन्धनात्, हरति=अपहरति, "आदत्ते" अरुणांशुभिन्नैः=सूर्यांशुविकसितैः, सरसिजैः=कमलैः संसृज्यते=संगच्छते ॥ ६९ ॥

( समासः ) विभातस्य वायुरिति विभातवायुः। अरुणस्य अंशव इति अरुणांशवः तैर्भिन्नानि तैः। सरसि जातनि सरसजानि तैः ॥ ६९ ॥

( सरलार्थः ) प्रभातवायुः, तव निश्वासवायोः सौगन्ध्य प्राप्तुं इच्छन्निव बालातपविकसितानि पुष्पाणि कमलानि च भूयोभूयमालिङ्गति ॥ ६९ ॥

( हिन्दी ) प्रातःकालकी वायु पराये गुणों द्वारा तुम्हारे स्वांसकी स्वाभाविक सुगंध प्राप्त करनेकी इच्छासे मानों वृक्षोंकी डालियों में खिले हुए फूलोंका और अरुण से विकसित कमलों का आलिङ्गन करती है ॥ ६९ ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु निर्धौतहारगुलिकाविषदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥

(अन्वयः) ताम्रोदरेषु, तरुपल्लवेषु, पतितं निर्धौतहारगुलिकाविशदं, हिमाम्भः, लब्धपरभागतया, अधरोष्ठे, त्वदीय, सदशनार्चिः, लीलास्मितं, इव आभाति ॥

(टीका) "हेकुमार !" ताम्रोदरेषु=रक्तगर्भेषु, तरुपल्लवेषु=द्रुमकिसलयेषु, पतित=समापतितं, निर्धौतहारगुलिकाविशदं=स्वच्छमुक्तामणिनिर्मलं, हिमाम्भः= तुषारोदकं, लब्धपरभागतया=प्राप्तगुणोत्कर्षतया, "परभागो गुणोत्कर्षे" इत्यमरः, अधरोष्ठे, त्वदीयं=तावकीनं, सदशनार्चिः=दन्तकान्तिसहितं, लीलास्मितं= क्रीडाहास्यं, इव, आभाति=शोभते ॥ ७० ॥

(समासः) ताम्रम् उदरं येषान्ते ताम्रोदरास्तेषु । तरुणां पल्लवाः तरुपल्लवास्तेषु । निर्धौता चासौ हारगुलिकेति निर्धौतहारगुलिका तद्वद्विशदं । परभागस्य भावः परभागता, लब्धा परभागता येनेति लब्धपरभागता तया । तव इदं त्वदीयं । सदशनार्चिः, दशनानां अर्चिः दशनार्चिः, तेन सहितम् ॥ ७० ॥

(सरलार्थः) रक्तगर्भेषु नवपल्लवेषु पतितं मुक्तामणिसदृशं हिमजलं, तव दन्तकान्तिसहितं लीलामनोहरं मृदुहास्यं अनुकुर्वत् अपूर्वां शोभाम्पुष्णाति ॥७०॥

(हिन्दी) नीचेके होंठ पर अति मनोहर दांतोंकी कान्ति सहित तुम्हारी साधारण मुस्कुराहट के समान वृक्षों[1] के लालपत्तों पर पड़ी हुई हारके मोतियोंकी-सी निर्मल ओसकी बूंद अत्यन्त शोभा को प्राप्त हो रही है ॥ ७० ॥

यावत्प्रतापनिधिराक्रमते न भानुरन्हाय तावदरुणेन तमो निरस्तम्
आयोधनाग्रसरतां त्वयि वीर ? याते किं वा रिपूँस्तव गुरुः स्वयमुच्छिनत्ति

(अन्वयः) प्रतापनिधिः, भानुः, यावत्, न, आक्रमते, तावत्, अन्हाय, अरुणेन, तमः, निरस्तं, हे वीर !, त्वयि, आयोधनाग्रसरतां, याते, सति, तव, गुरुः, किं, रिपून्, स्वयं, उच्छिनत्ति ? । ७१ ॥

(टीका) प्रतापनिधिः=तेजनिधिः, भानुः=सूर्यः, यावत् न आक्रमते=नोद्गच्छति, तावत्, अन्हाय=झटिति, "द्राग्झटित्यञ्जसान्हाय" इत्यमरः, अरुणेन=सूर्यसारथिना, तमः=तमिस्रं, निरस्तं=दूरीकृतं, हे वीर !=हे शूर ! त्वयि=भवति, आयोधनाग्रसरतां=संग्रामाग्रेसरत्वं, याते=प्राप्ते सति, तव=भवतः, गुरुः=रघुः, किं रिपून् शत्रून्, स्वयं, उच्छिनत्ति=उन्मूलयति ? ॥ ७१ ॥

( समासः ) प्रतापस्य निधिरिति प्रतापनिधिः, अग्रेसरतीत्यग्रसरः, तस्य भावोऽग्रसरता । आयोधनेषु अग्रसरतेत्यायोधनाग्रसरता तां ।। ७१ ।।

( सरलार्थः ) यथा सूर्यसारथिः "अरुणः" सूर्योदयात्प्रागेव तदीयसाहाय्यं विना तिमिरनिमग्नं समस्तं जगत् तिमिरमुन्मूल्य प्रकाशयति, तथैव त्वमपि उत्थितः सन् पितृसाहाय्यं विनैव सकलमरिमण्डलमुन्मूलय ।। ७१ ।।

[ हिन्दी ] सूर्य उदित नहीं होता है उसके पहले ही उसका सारथी अरुण अन्धेरा मिटा देता है, हे वीर ! संग्राम में तुम्हारे अग्रगामी होते हुऐ भी क्या अब तेरा पिता आप वैरियों को मारेगा ? । ७१ ॥

शय्यां जहत्युभयपक्षविनीतनिद्राः स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगाद्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ।७२ ।

[ अन्वयः ] मुखरशृङ्खलकर्षिणः, उभयपक्षविनीतनिद्राः, ते, स्तम्बेरमाः, शय्यां जहति, येषां, दन्तकोशाः, तरुणारुणरागयोगात्, भिन्नाद्रिगैरिकतटाः, इव, विभान्ति ॥ ७२ ॥

[ टीका ] उभयपक्षविनीतनिद्राः = वामदक्षिणपार्श्वपरिवर्तनापगतनिद्राः, मुखरशृङ्खलकर्षिणः = "अङ्गसङ्घाल्नात्" शब्दायमाननिगडाकर्षिणः, ते = तव, स्तम्बेरमाः = हस्तिनः, शय्यां = शयनं, जहति = त्यजन्ति, येषां = स्तम्बेरमाणां, दन्तकोशाः = दन्तकुड्मलाः, तरुणारुणरागयोगात् = बालाकरागसंयोगात्, भिन्नाद्रिगैरिकतटाः = छिन्नाद्रिधातुकूलाः, इव, विभान्ति = शोभन्ते ॥ ७२ ॥

(समासः) उभाभ्यां पक्षाभ्यां विनीता निद्रा येषान्ते । मुखराणि शृङ्खलानि कर्षन्ति तच्छीलाः मुखरशृङ्खलकर्षिणः । स्तम्बे रमन्त इति स्तम्बेरमाः । दन्ताः कोशा इव दन्तकोशाः । तरुणश्चासावरुणं इति तरुणारुणः; तस्य रागः तस्य योगात् । अद्रेः गैरिकतटा अद्रिगैरिकतटाः, भिन्ना अद्रिगैरिकतटा इति भिन्नाद्रिगैरिकतटाः ॥

(सरलार्थः) तव सेनागजेन्द्राः पार्श्वपरिवर्तनपुरःसरं निद्रां विहाय उत्तिष्ठन्ति, तेषां दन्ताश्च बालारुणसंयोगेन पर्वतोत्खातकेलिसंलग्नगैरिकरागरक्ता इव शोभन्ते ।

(हिन्दी) शब्दायमान सिकड़ोंको खीचनेवाले तुम्हारे हाथी दाहिनेबायें करवट लेकर जाग रहे हैं । जिनके दांत सूर्यकिरणके संबधसे पहाड़ के गेरुए टुकड़ों के खोदनेसे लगी हुई लाली की तरह चमकते हैं ।।७२।।

दीर्घेष्वमी नियमिताः पटमण्डपेषु निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि लेह्यानि सैन्धवशिलाशकलानि वाहाः ।।

( अन्वयः ) हेवनजाक्ष ? दीर्घेषु, पटमण्डपेषु, नियमिताः, वनायुदेश्याः, अमी, वाहाः, निद्रां, विहाय, वक्त्रोष्मणा, पुरोगतानि, लेह्यानि,सैन्धवशिलाशकलानि, मलिनयन्ति ॥७३॥

(टीका) हेवनजाक्ष ? दीर्घेषु = आयतेषु, पटमण्डपेषु = वस्त्रगृहेषु, नियमिताः = बद्धाः, वनायुदेश्याः = पारसीकाः, "वनायुजाः पारसीकाः, इति विश्वः" अमी= एते, वाहाः = अश्वाः, निद्रां, विहाय = त्यक्त्वा, पुरोगतानि = अग्रेस्थापितानि, लेह्यानि आस्वाद्यानि, सैन्धवशिलाशकलानि = सैन्धवशिलाखण्डानि, वक्त्रोष्मणा= मुखबाष्पेण, मलिनयन्ति = मलिनानि कुर्वन्ति ॥७३॥

( समासः ) वनजे इव अक्षिणी यस्यासौ वनजाक्षः, तत्सम्बुद्धौ, पटानां मण्डपानि पटमण्डपानि तेषु । वनायुदेशे भवा वनायुदेश्याः । सैन्धवशिलानां शकलानीति सैन्धवशिलाशकलानि ॥ ७३ ॥

( सरलार्थः ) हे कमलनयन ! वनायुदेशोत्पन्ना अश्वाः निद्रां विहाय सैन्धवशिलाखण्डानि मुखबाष्पेण मलिनयन्तो लिहन्ति पश्य ॥ ७३ ॥

( हिन्दी ) हे कमलनेत्र ! बड़े बड़े कनातके घेरांमें बन्धे हुए पारसी देश के ये घोड़े निद्रा छोड़ आगे रक्खे हुए सेन्धा नोनके टुकड़ोंको चाटते हुए मुखकी भांपसे उन्हें मैला कर रहे हैं ॥ ७३ ॥

भवति विरल भक्तिर्म्लानपुष्पोपहारः स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्तामनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः।

( अन्वयः ) म्लानपुष्पोहारः, विरलभक्तिः, भवति, प्रदीपाः, स्वकिरणपरिवेषोद्भेदशून्याः, "वर्तन्ते" मञ्जुवाक, पञ्जरस्थः, अयं, ते, शुकः, त्वत्प्रबोधप्रयुक्तां, नः, गिरं, अनुवदति ॥ ७४ ॥

( टीका ) म्लानपुष्पोपहारः = मुखबाष्पम्लानपुष्पोपायनः, विरलभक्तिः=विरलरचनः, भवति, प्रदीपाः = दीपाः, स्वकिरणपरिवेषोद्भेदशून्याः = निजांशुमण्डलस्फुरणशून्याः, "वर्तन्ते" मञ्जुवाक् = मधुरवचनः, पञ्जरस्थः = पिञ्जरस्थितः, अयं = एषः ते=तव, शुकः = कीरः, अपि, त्वत्प्रबोधप्रयुक्तां=त्वत्प्रबोधार्थमुच्चारितां, नः=अस्माकं, गिरं=वाणीं, अनुवदति ॥ ७४ ॥

( समासः ) पुष्पाणामुपहार इति पुष्पोपहारः, म्लानश्चासौ पुष्पोपहार इति

म्लानपुष्पोपहारः। विरला भक्तिर्यस्य सः विरलभक्तिः। स्वकिरणानां परिवेश इति स्वकिरणपरिवेशः, तस्य उद्भेदेन शून्याः। मञ्जुः वाक् यस्यासाविति मञ्जुवाक्। पञ्जरे तिष्ठतीति पञ्जरस्थः। तव प्रबोधस्त्वत्प्रबोधस्तस्मै प्रयुक्ता ताम्॥ ७४॥

(सरलार्थः) उपायनार्थमानीतानि पुष्पाणि मुखवाष्पादिना मलिनानि जातानि, प्रदीपा अपि निजकिरणमण्डलैः बहिः द्योतितुं असमर्थाः सञ्जाताः। अयञ्च पञ्जरस्थापितः तव शुकः अपि त्वत्प्रबोधार्थं उच्चारितां अस्माकं वाणीं अनुवदति॥

(हिन्दी) भेंटके फूल कुह्मलाजाने से सजावट मलिन हो रही है, दीपक अपने किरण मण्डलसे बाहर चमकने में असमर्थ हो रहे हैं, और पिंजड़े में रक्खा हुआ यह तुम्हारा सुग्गा भी अपनी मीठी वाणी में तुम्हारे जगाने के लिये हम लोगों की कही हुई वाणीका अनुवाद कर रहा है॥ ७४॥

इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार
मदपटुनिनदद्भिर्बोधितो राजहंसैः सुरगज इव गाङ्गं सैकतं सुप्रतीकः॥७५॥

( अन्वयः ) इति, विरचितवाग्भि, बन्दिपुत्रैः, सपदि, विगतनिद्रः, कुमारः, मदपटु, निनदद्भिः, राजहंसैः, बोधितः, सुप्रतीकः, सुरगजः, गाङ्गं, सैकतं, इव, तल्पं, उज्झाञ्चकार॥ ७५॥

(टीका) इति = इत्थं, विरचितवाग्भिः = रचितस्तुतिपाठैः, बन्दिपुत्रैः = वैतालिकैः सपदि = तत्क्षणे, "शीघ्रमेव" "सद्यः सपदि तत्क्षणे, इत्यमरः; विगतनिद्रः कुमारः = अजः मदपटु = मदमधुरं, "यथा स्यात्तथा" निनदद्भिः = निनादं कुर्वद्भिः, राजहंसैः बोधितः = जागरितः सुप्रतीकः = सुप्रतीकाभिधेयः, सुरगजः = दिग्गजः, गाङ्गं = गङ्गासम्बन्धि, सैकतं = सिकतामयं, 'पुलिनं" इव, तल्पं = शय्यां उज्झाञ्चकार = तत्याज॥ ७५॥

( समासः ) विरचिता वाचो यैस्तैः। बन्दिनः पुत्रा इति तैः। विगता निद्रा यस्य/सौ। मदेन पटु इति मदपटु। गङ्गाया इदं गाङ्गम्॥ ७५॥

( सरलार्थः ) मधुरभाषिभिः राजहंसैः प्रबोधितः सुप्रतीकनामा दिग्गजः गङ्गायां वालुकामयं प्रदेशं यथा त्यजति तथैव उक्तप्रकारेण वचनरचनाचतुरैः

---

† सैन्धवलवणमश्वानां श्लेष्मनिवारणार्थं दीयते। तथा च—

पूर्वाण्हकाले चाश्वानां प्रायशो लवणं हितम्! शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम्। इति धनञ्जयः।

स्तुतिपाठकैः जागरितः कुमारोऽपि शय्यां तत्याज ॥ ७५ ॥

( हिन्दी ) जैसे मधुरभाषी राजहंसों से जगाए हुए सुप्रतीकानामके सुरगजने गङ्गा का रतीला तट छोड़ा उसी प्रकार ऊपर कहे हुए वचनों की रचना करनेवाले सूतपुत्रोंसे जगाये हुए कुमार अजने शय्या छोडी ॥ ७५ ॥

अथ विधिमवसाय्य शास्त्रदृष्टं दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

(अन्वयः) अथ, अञ्चिताक्षिपक्ष्मा, "सः" शास्त्रदृष्टं, दिवसमुखोचितं, विधिं, अवसाय्य, कुशलविरचितानुकूलवेषः "सन्" स्वयवरस्थं क्षितिपसमाजं, अगात् ।

(टीका) अथ=शय्यात्यागानन्तरं, अञ्चिताक्षिपक्ष्मा=चारुनेत्रलोमा, सः=अजः, शास्त्रदृष्टं=शास्त्रावगतं, दिवसमुखोचितं,=प्रभातोचितं, विधिं=अनुष्ठानं, अवसाय्य=समाप्य, कुशलविरचितानुकूलवेषः–प्रसाधनचतुररचितस्वयंवरोचितवेषः "सन्" स्वयंवरस्थं=स्वयवरस्थितं, क्षितिपसमाजं—राजसमाजं, अगात्=जगाम ॥

(समासः) अञ्चितानि अक्षिपक्ष्माणि यस्य सः । शास्त्रे दृष्ट इति शास्त्रदृष्टस्तं । दिवसस्य मुखे उचित इति दिवसमुखोचितस्तम् । कुशलैः विरचितः अनुकूलवेशो यस्य सः । स्वयंवरे तिष्ठतीति स्वयवरस्थः तं । क्षितिपानां समाजः क्षितिपसमाजः तं

( सरलार्थः ) अजः शास्त्रोक्तां प्रातःकालोचितां क्रियां समाप्य समाजोचितवेषभूषितः सन् स्वयम्वरे राजसमाजं प्रति जगाम ॥ ७६ ॥

( हिन्दी ) शास्त्रानुसार प्रातःकाल की उचित विधिको समाप्त कर सुन्दर पलकों वाला अज ! रामसमाज के योग्य उत्तम उत्तम वस्त्र और अलङ्कारोंको पहिनकर स्वयंवरमें बैठे हुए राजाओंके समाजकी ओर गया ॥ ७६ ।

श्रीकालिदासकविराजविनिर्मितेऽस्मिन् काव्येवरेहि रघुवंशमितिप्रसिद्धे ।
यात्रां स्वयंवरकृतां रघुनन्दनस्य प्रोक्त्वा समाप्तिमगमत्खलु पञ्चमोऽयम् । ७१॥

( टीका ) अयं=एषः, पञ्चमः, सर्गः, रघुनन्दनस्य, नन्दयतीति नन्दनः रघोः नन्दनः इति रघुनन्दनः, तस्य रघुनन्दनस्य–रघुसुतस्य, "अजस्य" "नन्दनोहर्षके सुते" इति विश्वः, स्वयंवरकृतां=इन्दुमतीस्वयंवरार्थं कृतां, यात्रां, प्रोक्त्वा=कथयित्वा, समाप्तिं अगमत् ॥ ७७ ॥

इति पञ्चमः सर्गः ।